THE

HARIDAS SANSKRIT SERIES

43.



THE

# Parama Laghu Manjus'a

OF

NĀGES'A BHAṬṬA

WITH NOTES

BY

M. M. PT. S'RĪ NITYĀNANDA PANTA PARVATĪYA.



*Edited with the Arthadipika Commentary*

*By*

PANDIT S'RĪ SADĀS'IVA S'ARMĀ S'ĀSTRĪ



PUBLISHED BY

JAYA KRISHNA DAS HARIDAS GUPTA

*The Chowkhamba Sanskrit Series Office,*

**Benares City.**



*1946.*

॥ श्रीः ।

हरिदास-संस्कृत-ग्रन्थमाला

४३

महामहोपाध्याय पं० श्रीनागेशभट्टकृत-

# परमलघुमञ्जूषा

महामहोपाध्याय-

पण्डित श्रीनित्यानन्दपन्तपर्वतीय-

कृत टिप्पणी सहिता ।

साच-

टीकमगढ़स्थदेवेन्द्रसाहित्यविद्यालयप्रधानाध्यापक-

साहित्योपाध्यायव्याकरणाचार्यपदवीकजोशीत्युपाह्व-

पण्डित श्रीसदाशिवशास्त्रिणा

संशोधिता स्वकृतार्थदीपिकाख्यव्याख्यया च संयोजिता ।

[ द्वितीयं संस्करणम् ]

प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः-

चौखम्बा संस्कृत सीरिज़ आफिस,

विद्याविलास प्रेस, बनारस सिटी ।

सं० २००३ ]　　मूल्य १।)　　[ १९४६ ई०

॥ श्रीः ॥

# अथ परमलघुमञ्जूषास्थप्रकरणानाम्
## अनुक्रमणिका—



इति परमलघुमञ्जूषास्थप्रकरणानामनुक्रमणिका ॥

# भूमिका ।



अथ खलु पूज्ये धराहृदये कर्मभूम्यभिधेऽस्मिन्भरतखण्डे को नाम विलक्षणधिषणो विचक्षणो न विजानाति यत्किल सत्स्वपि प्रमाणान्तरेषु व्यवहारप्रवर्तकेषु प्रत्यक्षादिषु तेषां मूर्धन्यभूतो वेद एव सर्वोत्कर्षेण प्रमाणमिति । वेदस्य लक्षणन्तावत्प्रामाणिकैस्तत्रभवद्भिर्महर्षिवर्यैश्च—'इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेद' इत्युररीकृतम् । अत्रालौकिकपदेन प्रत्यक्षानुमानयोर्व्यावृत्तिः । अनुभूयमानस्य स्रक्चन्दनवनितादेरिष्टप्राप्तिहेतुत्वम्, औषधसेवनादेरनिष्टपरिहारहेतुत्वञ्च प्रत्यक्षतः सिद्धम् । स्वेनानुभविष्यमाणस्य पुरुषान्तरगतस्य च तथात्वमनुमानगम्यम् । अनेनैव पथा भाविजन्मगतसुखादिकमपि अनुमानगम्यमिति चेत्, न । तद्विशेषस्यानवगमात् । न खलु ज्योतिष्टोमादिरिष्टप्राप्तिहेतुः, कलञ्जभक्षणवर्जनादिरनिष्टपरिहारहेतुरित्यमुमर्थं वेदव्यतिरेकेणानुमानसहस्रेणापि तार्किकशिरोमणिरप्यवगन्तुं शक्नोति ।

अत एवोक्तम्—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥ इति ।

मन्त्रब्राह्मणात्मकत्वं तावददुष्टं वेदस्य लक्षणम् । तथाहि श्रूयते—"मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति । अत्रभवतोऽपौरुषेयस्य वेदस्यान्यल्लक्षणं भवितुं नार्हति । अव्याप्त्यतिव्याप्तिदोषसद्भावात् ।

एवञ्चास्य भगवतो वेदस्य प्रामाण्यं बोधकत्वात्स्वत एव सिद्धम् । पौरुषेयवाक्यन्तु बोधकं सदपि पुरुषगतभ्रान्तिमूलत्वसम्भावनया तत्परिहाराय मूलप्रमाणमपेक्षते । न तथा वेदः । तस्य नित्यत्वेन वक्तृदोषशङ्कानुदयात् ।

अत्र जैमिनिः—

पौरुषेयं न वा वेदवाक्यं स्यात्पौरुषेयता ।
काठकादिसमाख्यानाद्वाक्यत्वाच्चान्यवाक्यवत् ॥

समाख्यानं प्रवचनाद्वाक्यत्वं तु पराहतम् ।
तत्कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता ॥
( जै० न्या० मा० १।२।८ )

ननु भगवता बादरायणेन वेदस्य ब्रह्मकार्यत्वं सूत्रितम्—"शास्त्रयोनित्वात्" इति ( वे० सू० १।१।३ ) । ऋग्वेदादिशास्त्रकारणत्वाद् ब्रह्म सर्वज्ञमिति सूत्रार्थः ! बाढम् ; नैतावता पौरुषेयत्वं भवति, मनुष्यनिर्मितत्वाभावात् । ईदृशमपौरुषेयत्वमभिप्रेत्य व्यवहारदशायामाकाशादिवन्नित्यत्वं बादरायणेनैव देवताधिकरणे सूत्रितम् "अत एव च नित्यत्वम्" इति ( वे० सू० १।३।२९ ) । श्रुतिस्मृती चात्र भवतः "वाचा विरूपनित्यया" । ( ऋ० ८।७५।६ ) इति ।

स्मृतिः—

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥ इति ।

तस्मात्कर्तृदोषशङ्काया अनुदयात् मन्त्रब्राह्मणात्मकस्य वेदस्य यथार्थं प्रामाण्यं सिद्धम् ।

अतोऽस्य परमपूतस्य भगवतो वेदस्योपासना द्विजातिभिरवश्यं विधेयेति सर्वत्र मुक्तकण्ठेन निगदन्ति श्रुतिस्मृत्यादयः ।

श्रुतिः—"द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति, परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः, शिक्षा, कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति । अथ–परा यया तदक्षरमधिगम्यते" ( मुण्ड० १।१।४ ) इति ॥

स्मृतिः—

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ इति ।

तत्रभवान् पतञ्जलिरपि—"ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इत्यादिना द्विजातीन् बाढं वेदाध्ययने प्रवर्तयतीत्यलम्बहुना ।

यश्च किल द्विजन्मा वेदमधीत्यापि अर्थं न विजानाति सोऽयं पुमान् भारमेव वहति ।

"स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा" इतिश्रुतेः । तस्माद्द्विजातीनामर्थज्ञानाय शिक्षादिषडङ्गानामध्ययनमपि न हेयम्भवतीति निश्चप्रचम् ।

शिक्षायाम्—वर्णस्वराद्युच्चारणप्रकार उपदिष्टः। छन्दसि—मगणयगणादि-साध्यो गायत्र्यादिविवेको निर्दिष्टः। कल्पे—यागप्रयोगः। ज्यौतिषे कालविशेषे यागविशेषः। निरुक्ते-अर्थावबोधे निरपेक्षतया पदजातमुक्तम्। एवं व्याकरणेऽपि-अर्थविशेषमाश्रित्य स्वरप्रकृतिप्रत्ययैः वैदिकलौकिकशब्दानां व्युत्पत्तिः प्रदर्शिता।

तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते॥

इति पाणिनीयशिक्षातः "द्वे विद्ये वेदितव्ये" इतिमुण्डकोपनिषदश्च न शङ्कालेशो विलसति साङ्गवेदाध्ययने द्विजातीनाम्।

सत्स्वपि सर्वेषु व्याकरणेषु सार्वलौकिकवैदिकशब्दानां नितरां व्युत्पादकं तावत्पाणिनीयव्याकरणमेव।

पाराशरोयपुराणे—

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन॥ १॥

श्रीमत्पाणिनीयव्रतीतरतपस्यासन्तोषितमहेश्वरवरलब्धचतुर्दशसूत्रस्याम्नायत्वं वरीवर्तीति तन्मूलकत्वादस्यैव पाणिनीयव्याकरणस्य वेदाङ्गत्वम्। अत्र प्रमाणं पाणिनीयशिक्षावचनम्—

"येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।
कृत्स्नं व्याकरणं प्रोक्तम्" (पा० शि० ५७)॥

अत एव "सोऽयमक्षरसमाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो ब्रह्मराशिः" इति भाष्यमुपादायोक्तं भर्तृहरिणा—"यथैवेदमव्युच्छिन्नं चन्द्रतारकादि एवमस्याक्षरसमाम्नायस्य न कश्चिद् आधुनिकः कर्तास्ति। ऋक्तन्त्रव्याकरणे शाकटायनोऽपि—"इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं यथाऽऽचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय इन्द्रो भरद्वाजाय भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं प्रब्रूयाद्ब्रह्मराशिः" इति॥

भवति च निष्प्रपञ्चं तत्रभवताम्भवतां विपश्चितां वेदाङ्गत्वेन सार्वलौकिकवैदिकशब्दानां नितरां व्युत्पादकत्वेन चाखिलभारतवर्षे विशेषतश्च तेषु तेषु विद्यापीठेषु वाराणस्यादिमाननीयप्रदेशेषु च पठनपाठनपथा सर्वत्रातिशेते पाणिनीयव्याकरणमेवेति।

तत्र तत्रभवता भगवता पाणिनीयमुनिना विरचिताङ्कुररोपण महर्षिणा पूज्य-

पादेन श्रीकात्यायनेन विरचितपल्लवे श्रीमता भगवता भाष्यकारेण पतञ्जलिमहर्षिणा बाढीकृतस्कन्धेऽत्र शाखिनि समारुरुक्षूणां तत्फलस्वादरसिकानां सुखसमारोहणाय विरचिताः सोपानपरम्परा इव नानाविधाः प्रबन्धाः पण्डितप्रकाण्डैर्मान्यवरैर्मनीषिभिः।

तेषु प्रबन्धेष्वद्य श्रीमन्महामहोपाध्यायनागेशभट्टकृत–'परमलघुमञ्जूषा' वैयाकरणाभिमतभाष्यसिद्धान्तरत्नानि बिभर्ती मञ्जूषेव तत्रभवताम्भवतां करकमलेषु सादरं समर्प्यते।

श्रीमन्महामहोपाध्यायनागेशभट्टाः 'काले' इत्युपनामका महाराष्ट्रीयब्राह्मणा तीव्रतरतपस्यासन्तोषितवागीश्वरीवरलब्धवैदुषिकाः, कृतवाराणसीवास्तव्याः सतीगर्भजाः श्रीशिवभट्टतनुजन्मानः श्रीहरिदीक्षितगुरुवर्यैरपि प्रशंसिताः शब्देन्दुशेखराद्यनेकग्रन्थकर्तार इत्यादि तत्तन्नागेशभट्टकृतग्रन्थोल्लेखात्किञ्चिज्ज्ञायते तत्रभवतां ग्रन्थकृताम्परिचयः।

इयं परमलघुमञ्जूषा लघुत्वात्सङ्क्षेपतो वैयाकरणसिद्धान्तानां प्रदर्शिकेति तस्या व्याख्यानं परीक्षादित्सूनां छात्राणामुपकाराय कर्तव्यत्वेनात्यावश्यकतया विद्याविलासमुद्रणालयाध्यक्षेण व्याकरणाद्यनेकग्रन्थप्रकाशकेन श्रीहरिदासगुप्तात्मजजयकृष्णदासश्रेष्ठिना व्याख्यानसंशोधनकर्मण्यनेकदा प्रार्थितोऽहम्–अर्थदीपिकाख्यव्याख्यां व्यरीरचम्।

तस्यां व्याख्यायां प्राधान्येन तत्तन्मतस्य स्पष्टीकरणं स्वसिद्धान्तानाम्प्रदर्शनम्, प्रतिकूलमतानां प्रत्याख्यानं तत्तत्पदार्थानां निर्दुष्टं लक्षणमित्यादि च प्रदर्शितम्।

अपरञ्च छात्राणामधिकलाभाय विदुषां कौतुकाय च महामहोपाध्यायश्रीनित्यानन्दपन्तपर्वतीयकृतटिप्पण्येयं परमलघुमञ्जूषासालङ्कृता, अर्थदीपिकया च संवलिता यथाशेमुषि मया संशोधिता।

तत्र तावद्गच्छतस्खलनन्यायान्मतिमान्द्याद् दृष्टि दोषान्मुद्रकदोषाद्वा काचनाशुद्धिः स्यात्तां गुणैकपक्षपातिनो विद्वांसो निरस्य मामनुगृह्णन्त्विति साञ्जलि बन्धं प्रार्थयते।

विदुषामनुचरः—

**जोशीत्युपाह्वसदाशिवशास्त्री**



श्रीगणेशाय नमः ।

# परमलघुमञ्जूषा

शिवं नत्वा हि नागेशेनानिन्द्या परमालघुः ॥
वैयाकरणसिद्धान्तमञ्जूषैषा विरच्यते ॥ १ ॥

## अथार्थदीपिका-प्रारम्भः ।

यस्य स्मरणमात्रेण प्रत्यूहा यान्त्यधीरताम् ।
यं नत्वा कृतकृत्याः स्युस्तं वागीशमहं भजे ॥ १ ॥
दामोदरतनूद्भूतः राधादेव्यास्तु गर्भजः ।
सदाशिवाभिधानोऽयं कौण्डिन्यकुलभूषितः ॥ २ ॥
स्मृत्वा गुरुपदाम्भोजं नत्वा पित्रोः पदाम्बुजम् ।
वैयाकरणमञ्जूषाटीकां कुर्वेऽर्थदीपिकाम् ॥ ३ ॥

ॐ "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते, वीरपुरुषकाणि च भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च वृद्धियुक्ता यथा स्युः" इति वृद्धिसूत्रस्थभाष्यादिस्मृतिसिद्धकर्तव्यताकं ग्रन्थादौ कृतं मङ्गलं शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च निबध्नाति—*शिवमित्यादिना* । शिवं निस्त्रैगुण्यमङ्गलस्वरूपं 'शिवमद्वैतं चतुर्थं मन्यन्ते' इति श्रुतेः। ननु निर्गुणमूर्तेर्नतिप्रयोजकाकारवत्वाभावे नत्यसम्भव इति चेत्, न शेते अस्मिञ्जगदिति शिवस्तमित्यर्थात्। संहारशक्तिमतोऽप्याशुतोषत्वात्तन्नमस्कारोऽपि मङ्गलायैव भवतीति न कश्चिद्विरोधः। अथ वा शिवं शिवसदृशं स्वपितरमित्यर्थः। *नत्वेति*। अञ्जलिशिरःसंयोगादिव्यापारेण तोषयित्वेत्यर्थः। स्वानिष्टापकृष्टत्वप्रकारकबोधानुकूलव्यापाररूपनमस्कारो नमधात्वर्थः॥ *नागेशेनेति*। ननु—

आत्मनाम गुरोर्नाम नामातिकृपणस्य च ।
श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥

इत्यात्मनामोच्चारणप्रयुक्तो दोषः कूपखानकन्यायेन समाधेय इति तन्न। नान्तरीयकपापनाशस्यैव तन्न्यायविषयत्वात् आत्मनामोच्चारणस्य ग्रन्थकरणनान्तरीयकत्वा-

तत्र वर्णपदवाक्यभेदेन स्फोटस्त्रिधा। तत्रापि जातिव्यक्तिभेदेन पुनः षोढा। अखण्डपदस्फोटोऽखण्डवाक्यस्फोटश्चेति सङ्कलनयाऽष्टौ स्फोटाः। तत्र वाक्यस्फोटो मुख्यः, तस्यैव लोके ऽर्थबोधकत्वात्तेनैवार्थसमाप्तेश्चेति। तदाह न्यायभाष्यकारः-"पदसमूहो वाक्यमर्थसमाप्तौ" इति। अस्य समर्थमिति शेषः। तत्र प्रतिवाक्यं सङ्केतग्रहासम्भवाद् वाक्यान्वाख्यानस्य लघूपायेनाशक्यत्वाच्च कल्पनया पदानि प्रविभज्य पदे प्रकृतिप्रत्ययभागान्प्रविभज्य कल्पिताभ्यामन्वयव्यतिरेकाभ्यां तत्तदर्थविभागं शास्त्रमात्रविषयं परिकल्पयन्ति स्माचार्याः।

---

भावात्। नच "आत्मनाम" इति निषेधात्स्वनामोपादानमनुचितमिति वाच्यम्। "आत्मनाम" इति स्मृतौ 'न गृह्णीयात्' इत्यस्य नोच्चारयेदित्यर्थेन लेखने दोषाभावात्। अत एव "गोनर्दीय आह" 'भट्टोजीदीक्षितकृतिः' इत्यादि सर्वो व्यवहारः सङ्गच्छते।

*वैयाकरणसिद्धान्तमञ्जूषेति*। वैयाकरणानां पाणिन्यादीनां ये सिद्धान्तास्तेषां मञ्जूषेव मञ्जूषा। यथा सम्पुटकः सकलमणीमुक्तादीनां सङ्ग्राहकः, तथा अयमपि मञ्जूषाख्यो ग्रन्थः सकलवैयाकरणसिद्धान्तसङ्ग्राहक इति भावः। एतेन वैयाकरणभूषणेनेदं गतार्थमित्यपास्तम्। तत्र सकलसिद्धान्ताभावात्। *एषेति*। भाविनोऽपि बुद्ध्या विषयीकरणादेषेति निर्देशः। *तत्रेति*। सकलसिद्धान्तानां मध्ये।

*तत्रापीति*। त्रिविधेष्वपीत्यर्थः। *अष्टौ स्फोटा इति*। वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, अखण्डपदस्फोटः, अखण्डवाक्यस्फोटः, वर्णपदवाक्यभेदेन त्रयो जातिस्फोटाः, सङ्कलया अष्टाविति भावः। *स्फोट इति*। स्फुटति प्रकाशते अर्थो अस्मादिति व्युत्पत्त्या पङ्कजादिपदवद्योगरूढः स्फोटशब्दः। *तस्यैवेति*। वाक्यस्फोटस्यैवेत्यर्थः, शक्तिग्राहकशिरोमणिना वृद्धव्यवहारेण प्रथम तत्रैव शक्तिग्रहादिति भावः।*तेनैवेति*। वाक्येनैवेत्यर्थः। अर्थसमाप्तेरिति*। निराकाङ्क्षस्य वाक्यार्थस्य तत एव ज्ञानेन वाक्येनैव वाक्यार्थस्य पूरणत्वादित्यर्थः। *पदसमूह इति*। सुबन्तसमूहः, तिङन्तसमूहः, सुबन्ततिङन्तसमूहश्चेत्यर्थः। न तु शक्तं पदमिति भावः। *सङ्केतग्रहासम्भवादिति*। शक्तिग्रहासम्भवादित्यर्थः। *कल्पनयेति*। वाक्ये पदानि प्रकल्प्य पदे च प्रकृतिप्रत्ययभागं प्रकल्प्य कल्पिताभ्यां अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययार्थाः कल्पिताः इत्यर्थः। *शास्त्रमात्रविषयमिति*। शास्त्रीयप्रक्रियोपयोगी लोके वाक्यस्यैव बोधकत्वादित्यर्थः। शास्त्रीयकार्यस्मरणपूर्वकप्रयोगे एव धर्मोत्पत्तेः। अत एव भाष्ये उक्तं 'एकः शब्दः सम्यक्ज्ञातः सुष्टुप्रयुक्तः स्वर्गे लोके च कामधुक् भवति' इति। *कल्पयन्तीति*। अन्यथानुपपत्त्येति भावः। *आचार्याः*-पा-

तत्र शास्त्रप्रक्रियानिर्वाहको वर्णस्फोटः । प्रकृतिप्रत्ययास्तत्तदर्थवाचका एवेति तदर्थः । उपसर्गनिपातधात्वादिविभागोऽपि काल्पनिकः । स्थानिनो ऽद्य आदेशास्तिबादयः कल्पिता एव । तत्र ऋषिभिः स्थानिनां कल्पिता अर्थाः कण्ठरवेणैवोक्ताः । आदेशानां तु स्थान्यर्थाभिधानसमर्थस्यैवादेशतेतिभाष्यात्तेऽर्थाः । एवं च स्थानिनां वाचकत्वमादेशानां वेति विचारो निष्फल एव । कल्पितवाचकत्वस्योभयत्र सत्त्वात् । मुख्यं वाचकत्वं तु कल्पनया बोधितसमुदायरूपे पदे वाक्ये वा, लोकानां तत एवार्थबोधात् ।

उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः ।

---

णिन्यादयः ।

*शास्त्रप्रक्रियेति* । प्रकृतिप्रत्ययरूपस्य व्याकरणेन गृहीतशक्तिकस्य पच् तिप् इत्यादिकस्य निर्वाहक इति भावः । *वर्णस्फोट इति* । वर्णस्फोटः इत्यस्य वर्णाः वाचका इत्यर्थो न सम्भवति, अर्थबोधानुकूला शक्तिः वर्णसमूहे एव पर्याप्ता न प्रत्येकं, तथा सति प्रत्येकं अर्थवत्त्वात्प्रातिपदिकसंज्ञापत्तौ धनं वनं इत्यादौ नलोपाद्यापत्तेः । *प्रकृतीति* । प्रक्रियते प्रत्ययात्पूर्वं क्रियते इति प्रकृतिरिति केचिदाहुस्तन्न समीचिनम् । बहुपटुरित्यत्र अव्याप्तेः । किन्तु प्रत्ययविधौ उद्देश्यतावच्छेदकाक्रान्तत्वम्प्रकृतित्वम् । *काल्पनिक इति* । परमार्थतस्तु स्फोट एव अर्थवान्, प्रकृतिप्रत्ययविभागस्तत्तदर्थविभागश्च सर्वोऽपि कल्पित एवेति भाष्यसिद्धान्तः । *कण्ठरवेणेति* । "लः कर्मणि च" इत्यादिना स्थानिनामेवार्थाः उक्ता नत्वादेशानामिति । *आदेशानामिति* । यस्य स्थाने यः प्रयुज्यते स तमेवार्थम्बोधयति, यथा—पादशब्दस्य स्थाने कृतः पदादेशः, यथा वा क्रोष्टुशब्दस्य स्थाने कृतः क्रोष्टृ आदेशः इति भावः । *एवञ्चेति* । मुख्यवाचकस्य पदे एव सत्वाच्च । *निष्फल एवेति* । व्यवहारेण वाक्ये शक्तिग्रहाद्वाक्यस्यैव वाचकत्वम् । अत्र वाचकत्वन्तु कल्पितमेव । सा कल्पना आदेशे, उत स्थानिनि, विनिगमनाविरहादुभयत्रापि सम्भवतीति स विचारो निष्फल इति भावः । *उभयत्रेति* । स्थान्यादेशयोः । *पदे*—सुप्तिङन्ते, न तु 'शक्तं पदम्' इति नैयायिकपरिभाषिते । *वाक्ये*-एकतिङन्तार्थमुख्यविशेष्यके । *लोकानामिति* । लोकानां शक्तिग्राहकवृद्धव्यवहारेण शिरोमणिना तत एव बोधादिति भावः ।

*उपेयप्रतिपत्त्यर्थेति* । उपेयस्य प्रतिपत्त्यर्थं ज्ञानार्थं उपायाः वर्णस्फोटादिरूपाः अव्यवस्थिताः । यथा—आनन्दवल्ल्यां शुद्धब्रह्मज्ञानार्थं अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेति पञ्चसु कोशेषु अपारमार्थिकब्रह्मत्वप्रतिपादनमुपायः, यथा वा अरुन्धतीज्ञानार्थं स्थूलनक्षत्रे अपारमार्थिकारुन्धतीत्वबोधनम्, तथा पारमार्थिकाखण्डवाक्यबोधार्थमेते वर्णपदवाक्याखण्डपदस्फोटा उपायाः ।

इति न्यायेन व्याकरणभेदेन स्थानिभेदेऽपि न क्षतिः देशभेदेन लिपिभेदवदिति दिक्।

तत्र "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इति गौतमसूत्रे शब्दश्चाप्तोपदेशरूपः प्रमाणम्। आप्तो नामानुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान्, रागादिवशादपि नान्यथावादी यः स इति चरके पतञ्जलिः।

तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरू-

---

उक्तञ्च—

उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते।

इति। व्याकरणभेदेन स्थानिनामनियतत्वान्न वाचकत्वमिति मतं निराकरोति—*व्याकरणेति*। *लिपीति*। भिन्नानामपि लिपीनां बोधकत्ववदिति भावः। *दिगिति*। दिगर्थस्तु—वृत्तिषु एकार्थीभावः, नामार्थयोः प्रकृतिप्रत्यययोरित्यादिकमपि कल्पितमिति।

एवं वाक्यस्य शब्दस्य वाचकत्वमुक्त्वा तस्य प्रामाण्यमाह—*तत्रेति*। *प्रत्यक्षेति*। प्रत्यक्षप्रमायाः करणं प्रत्यक्षम्—इन्द्रियसन्निकर्षजन्यं ज्ञानम्, अथवा ज्ञानाजन्यज्ञानत्वम्, ज्ञानाकरणकज्ञानत्वम्वा। अनुमितिकरणमनुमानम्, अथवा व्याप्तिज्ञानकरणकं ज्ञानमनुमितिः। सादृश्यज्ञानकरणकं ज्ञानमुपमितिः। शब्दज्ञानकरणकं ज्ञानं शाब्दबोधः। एतेषु प्रमाणेषु मध्ये शब्दप्रमाणमाह—*शब्दश्चेत्यादिना*। *आप्तोदेश इति*। आप्तकर्तृकोच्चारणविषय इति भावः। यद्वा आप्तोपदेशेन वृद्धव्यवहारेण आप्तकर्तृककथनमात्रेण रूप्यते गृह्यते इति आप्तोदेशः। *आप्तो नामेति*। आप्तत्वञ्च—रागमोहादिहिनत्वे सति कृत्स्नवस्तुनिश्चयवत्वम्। संशयव्यावृत्तये—निश्चयेति। सरागादिनिरासाय—रागादीति। यद्वा अर्थतत्वज्ञानमाप्तिः, तया प्रतीत इत्याप्तः। *चरकेइति*। पतञ्जलिमहर्षिप्रणितचरकग्रन्थे इत्यर्थः।। *पतञ्जलिरिति*। व्याकरणमहाभाष्ययोगभाष्यकारः।

ननु प्रमाणत्वं प्रमाकरणत्वं तच्च तादृशशब्दस्य चेत्तर्हि सर्वस्य श्रोतुस्ततो बोधापत्तिरत आह-*तद्धर्मावच्छिन्नेति*। *तद्धर्मावच्छिन्नेति*। घटत्वावच्छिन्नविषयकवृत्तीत्यर्थः। ज्ञाने वृत्तिवैशिष्ट्यं सामानाधिकरण्येन बोध्यम्। ज्ञानाधिकरणत्वं विषयतयेति भावः। अत्र तार्किकाः वृत्तिज्ञानपदज्ञानयोः पृथक्हेतुत्वमिच्छन्ति। शाब्दिकैस्तु लाघवाद्विशिष्टस्यैव हेतुत्वमुक्तम्।

ननु शाब्दिकानामपि वृत्तिविषयकोद्बुद्धसंस्कारसामानाधिकरणवृत्त्याश्रयपदविषयकज्ञानस्य हेतुत्वे गौरवमिति चेन्न। सामानाधिकरण्यादीनां सम्बन्धकोटौ निवेशात्। यस्य घटादिपदस्य वृत्तिर्ज्ञायते तत्र पदे वृत्तिविषयकसंस्कारो ज्ञानं चेत्युभयमपि

पितवृत्तिविशिष्टज्ञानं हेतुः। अत एव नागृहीतवृत्तिकस्य शाब्दबोधः। अत एव च "(१)नहि गुड इत्युक्ते मधुरत्वं प्रकारतया गम्यते" इति समर्थसूत्रभाष्यं सङ्गच्छते। गुडादिशब्देन गुडत्वजात्यवच्छिन्नो (२)गुडपदवाच्य इत्येव बोधो जातिप्रकारकः। मधुरत्वं तु 'गुडो मधुर ऐक्षवत्वाद्' इत्यनुमानरूपमानान्तरगम्यम्। विशेष्यविशेषणभावव्यत्यासेन गृहीतशक्तिकस्य पुंसो घटपदाद् घटत्वविशिष्टबोधवारणाय तद्धर्मावच्छिन्नेति। ज्ञाने वृत्तिवैशिष्ट्यं च स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्य-स्वाश्रयपदविषयकत्वोभयसम्बन्धेन बोध्यम्। अतो नागृहीतवृत्तिकस्य, नापि विस्मृतवृत्तिकस्य,

---

विषयतयास्ति, वृत्त्याश्रयपदविषयकं च तज्ज्ञानम्। *विशिष्टज्ञानमिति* वैशिष्ट्यञ्च अनुपदमेव मूले वक्ष्यते। *अत एवेति*। उक्तसमुदितस्य कारणत्वादेवेत्यर्थः। *नागृहीतवृत्तिकस्येति*। वृत्तिविषयकसंस्काराभावात्। *मधुरत्वमिति* मधुरत्वप्रकारकबोधादर्शनात्। *मानान्तरगम्यमिति*। मधुरत्वस्यानुमानेन व्यञ्जनया मनसा वोपस्थितिरित्यर्थः। तार्किकाः ज्ञानलक्षणाजन्यं वदन्ति। अलङ्कारिकाः व्यञ्जनाजन्यं वदन्ति। अन्येऽनुमानजन्यं वदन्ति। अनुमानश्चेत्थम्—गुडो, मधुरः। ऐक्षवत्वात्। यो यो मधुरत्वाभाववान्, स स इक्षुविकारत्वाभाववान्। यथा-पिचुमन्द इति। *वारणायेति*। घटत्वविशेष्यकशक्तिग्रहानन्तरं घटत्वप्रकारकशाब्दबोधवारणायेत्यर्थः। तद्धर्मावच्छिन्नेति*। नन्वेवं त्यदादीनां बुद्धिस्थत्वावच्छिन्ने शक्तिग्रहात् तमानयेत्युक्ते बुद्धिस्थमानयेत्येव बोधः स्यान्न तु घटत्वादिविशेषरूपेण। अत एव वह्निव्याप्य धूमवत्पर्वतं तच्छब्देन परामृश्य स वह्निमानिति वाक्यजन्यशाब्दबोधे परामर्शजन्यत्वेनानुमितिलक्षणातिव्याप्तिरुक्ता दीधिताविति चेदत्राहुः। सामान्यरूपेण शक्तावपि त्यदादितो विशेषरूपेणैवोपस्थितिः। उपस्थितिशक्तिग्रहयोः समानाकारकत्वप्रवादस्तु त्यदाद्यतिरिक्तविषय इति घटत्वादिविशेष एव शक्यतावच्छेदकः। यद्वा त्यदादीनां नामार्थत्वमिष्टमेवेति केचित्। *स्वविषयकेति*। वृत्तिविषयको य उद्बुद्धसंस्कारः, तत्सामानाधिकरण्यं वृत्त्याश्रयपदविषयकत्वञ्चेत्यर्थः। अस्ति च घटपदार्थनिरूपितवृत्तिविषयक उद्बुद्धसंस्कारः, विषयतया घटपदज्ञानं च।

अयम्भावः—घटादिपदस्य घटत्वादिविशिष्टे शक्तिरित्यादिवृत्तिविशेष्यकज्ञानानन्तरं तत्समानाकार एव संस्कार उत्पद्यते। तादृशसंस्कारविशिष्टं पदज्ञानं शाब्दबोधे हेतुरिति। *स्वाश्रयेति*। स्वाश्रयपदेत्यस्य फलं तद्वाचकपदाज्ञानवतो न बोधःइति ज्ञेयम्। *नागृहीतस्येति*। वृत्तिविषयसंस्काराभावादिति भावः। *विस्मृतेति*।

---

( १ ) गुड इत्युक्ते मधुरत्वं प्रकारतया नहि गम्यते इत्यन्वयः।

( २ ) इदं शब्दस्य बोधविषयत्वाभिप्रायेणोक्तमिति बोध्यम्।

नापि तत्पदमजानतो, नापि घटपदाश्रयत्वेनोपस्थिताकाशस्य, नापि जनकतयोपस्थितचैत्रादेश्च बोधः। संस्कारकल्पिका च वृत्तिस्मृतिरेव(१)शाब्दबुद्धिरेव वेत्यन्यदेतत् ।

सा च वृत्तिस्त्रिधा—शक्तिर्लक्षणा व्यञ्जना च। तत्र शक्तिः कः पदार्थ इति चेत् ?

अत्र तार्किकाः—'अस्माच्छब्दादयमर्थो बोद्धव्यः' इत्याकारा 'इदं पदमिममर्थं बोधयतु' इत्याकारा वेश्वरेच्छा शक्तिः लाघवात् । सैव सङ्केतः सम्बन्धः। शक्तेर्यद्यपि विषयत्वलक्षणः सम्बन्धः पदेऽर्थे बोधे च तथाऽपि

---

उद्बुद्धसंस्काराभावादितिभावः। *तत्पदमजानत इति*। तत्र विषयतया ज्ञानस्याभावात्। *आश्रयत्वेनेति* । तद्धर्मावच्छिन्ननिरूपितवृत्त्याश्रयत्वनिवेशस्येदम्फलम्बोध्यम्। तथाच-शब्दस्याकाशगुणत्वाद्घटादिशब्दादाकाशस्योपस्थितावपि आकाशत्वावच्छिन्ननिरूपितवृत्तेर्घटादिशब्देऽभावान्न तद्बोध इति भावः।

ननु संस्कारस्यातीन्द्रियतया तत्सत्वे मानाभाव इत्यत आह-*संस्कारकल्पिका चेति*। स्मृतिरूपकार्येणैव कारणस्य संस्कारस्यानुमानादिति भावः। ननु संस्कारस्य फलनाश्यत्वाद्वृत्तिस्मृतौ संस्कारस्य नष्टत्वाच्छाब्दबोधानापत्तिरत आह—*शाब्दबुद्धिरेवेति*। चरमफलस्यैव संस्कारनाशकत्वमिति भावः।

तार्किकमते ईश्वरेच्छा शक्तिः, मीमांसकमते अतिरिक्ता पदार्थान्तरम्, नवीनतार्किकैरीश्वरेच्छा ज्ञानं वा कृतिर्वेति विनिगमनाविरहान्मीमांसकमतमेवाङ्गीकृतम् । इतिमतान्तरासामञ्जस्य सूचनाय तां विभजते-*सा चेति*। अनेन संगतिः सूचिता। *तत्र* तासु वृत्तिषु॥ *शक्तिरिति*। शक्तिश्च पदेन सह पदार्थस्य सम्बन्धः। स च अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपः। यद्यपि ईश्वरेच्छायाः ऐक्यात् पटशब्दात् घटो बोद्धव्य इतीश्वरेच्छा पटेऽप्यस्तीत्यतिप्रसंगः। एवं गङ्गापदजन्यबोधविषयत्वप्रकारकेच्छायास्तीरेऽपि सत्वाच्छक्त्यैव तीरबोधोपपत्तेर्लक्षणोच्छेदापत्तिः तथापि गङ्गापदवाच्यत्वव्यवहारस्य तीरेऽभावाद्गङ्गादिपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छैव गङ्गादिपदानां शक्तिः। तीरादिनिष्ठविशेष्यताया गङ्गादिपदजन्यबोधविषयत्वप्रकारतानिरूपितत्वेऽपि न तस्यास्तादृशविषयतात्वेन तादृशप्रकारतानिरूपितत्वम्, अपि तु शुद्धविषयतात्वेनेति नातिप्रसंगः, न वा लक्षणोच्छेदप्रसङ्ग इति भावः।

---

(१) स्मृतेः शाब्दबुद्धिं प्रति न जनकत्वं किन्तु उद्बुद्धसंस्कारस्यैवेति मतमभिप्रेत्येदम्। स्पष्टं चेदं सङ्क्षेपशारीरके प्रथमाध्याये अन्विताभिधाननिरूपणावसरे इति तत्र एवावगन्तव्यम्।

बोधनिष्ठजन्यतानिरूपितजनकतावत्त्वेन शक्तिविषयो वाचकः,पदजन्यबोधविषयत्वेन शक्तिविषयो वाच्य इति नातिप्रसङ्गः । यद्यपि प्रथमं शक्तिग्रहो वाक्य एव तथाऽप्यावापोद्वापाभ्यां शास्त्रकृत्कल्पिताभ्यां तत्तत्पदशक्तिग्रह इत्याहुः ।

तन्न । इच्छायाः सम्बन्धिनोराश्रयतानियामकत्वाभावेन सम्बन्धत्वासम्भवात्। "सम्बन्धो हि सम्बन्धिद्वयभिन्नत्वे,सति द्विष्ठत्वे च सति आश्रयतया विशिष्टबुद्धिनियामकः" इत्यभियुक्तव्यवहारात् । यथा घटवद् भूतलमित्यादौ संयोगरूपः सम्बन्धः सम्बन्धिभ्यां भिन्नो द्विष्ठा घटनिरूपितसंयोगाश्रयो भूतलमितिविशिष्टबुद्धिनियामकश्च, नात्र तथा घटशब्द इच्छावान् तदर्थो वा इच्छावानिति व्यवहारः ।

तस्मात्पदपदार्थयोः (१)सम्बन्धान्तरमेव शक्तिः, वाच्यवाचकभावापरपर्याया । तद्ग्राहकश्चेतरेतराध्यासमूलकं(२) तादात्म्यं, तदेव

---

*नातिप्रसङ्गः* । न सम्बन्धादौ वाचकत्वापत्तिः । *प्रथमं शक्तिग्रह इति* । बालानां वाक्यादेवार्थबोधात । आवापः-पदान्तरप्रक्षेपः । *उद्वापः*—निष्कासनम् ।

घटमानय, घटं नय इत्यादिः ।

*इच्छेति । इच्छाविषयो यो बोधस्तदीयविषयताया इच्छाश्रयतानियामकत्वाभावादित्यर्थः । तत्र हि न पदं नापि पदार्थः इच्छाविषयः, किन्तु बोध एव । न च बोधविषयतयैव इच्छाश्रयता सम्भवतीति वाच्यम्। अयं शब्दः अयमर्थो वा इच्छावानिति प्रतीत्यभावादिति भावः ।

*सम्बन्धान्तरम्*। उक्तेश्वरेच्छादिभिन्नम्।*वाच्यवाचकेति*।शब्दे कारणतारूपा-

---

(१) बोधजनकत्वस्यापि आश्रयतानियामकत्वाभावान्न सम्बन्धत्वम्। नापि तस्य शक्तित्वम् । प्रयोज्यप्रयोजकव्यवहारं पश्यता बालेन प्रयोज्यस्य प्रवृत्त्या तस्य ज्ञानमनुमाय ज्ञानस्योपस्थितत्वाच्छब्दमेव कारणत्वेन गृहीत्वाऽसम्बन्धस्य कारणत्वानुपपत्तिज्ञानपूर्वकं कल्प्यमानस्य स्वयमनुपपद्यमानत्वेन गृहीतजनकत्वरूपस्य तद्घटितस्य वा ग्रहीतुमनुचितत्वात् । तस्मात् सम्बन्धान्तरमेव वाच्यवाचकभाव इति लघुमञ्जूषायां स्पष्टम् ।

(२) इतरेतराध्यासो मूलं ज्ञापकं यस्येत्यर्थः । तथाहि—शब्दार्थौ परस्परतादात्म्यवन्तौ इतरेतराध्यासवत्वात्, यत्र यत्र इतरेतराध्यासस्तत्र तत्र तादात्म्यं यथा गुणगुणिनोः । यत्र न तादात्म्यं न तत्र इतरेतराध्यासः यथा घटपटयोः । गुणगुणिनोश्च इतरेतराध्यासो नीलो घट इत्यादौ प्रत्यक्षादिप्रतीतौ दृष्टः । शब्दार्थयोरितरेतराध्या-

(१)सम्बन्धः। उभयनिरूपिततादात्म्यवानुभय इत्यर्थपदयोऽर्थव्यवहारात् । शक्तेरपि कार्यजनकत्वे सम्बन्धस्यैव नियामकत्वात् । दीपादिगतप्रकाशकत्वशक्तावपि आलोकविषयसम्बन्धे सत्येव वस्तुप्रकाशकत्वं नान्यथेति दृष्टत्वात् ।

---

शक्तिः प्रसिद्धैव, अर्थे शक्तिः वाच्यतारूपैव । *तद्ग्राहकमिति* । वृद्धव्यवहारादिवदिदमपि तद्ग्राहकमित्यर्थः । *अध्यासेति* । अन्यस्मिन्नन्यधर्मावभासः । तन्मूलकं तादात्म्यं नतु वास्तवमित्यर्थः । तदुक्तं पातञ्जलभाष्ये—'सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको योऽयं शब्दः सोऽर्थः योऽर्थः स शब्दः' इति । शक्तेः सम्बन्धो बोध्यबोधकनियामको भवति न तु शक्तिरित्याह-*शक्तेरपीति* । *सम्बन्धस्यैव*—तदन्यसम्बन्धस्यैवेत्यर्थः । तत्र मानमाह—*दीपेति* ।

सोऽपि "शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्करः"इति पातञ्जलसूत्रे (पा०३सू० १७) "गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानम्" इत्यनुभवप्रदर्शनेन भाष्यकारेण स्पष्टीकृतः । 'रामेति द्व्यक्षरं नाम' इत्यादिना अग्रे मूलेऽपि स्फुटः । तस्मादन्वयव्यतिरेकानुमानेव शब्दार्थयोस्तादात्म्यं सिद्धम् ।

( १ ) तादात्म्यस्य च सम्बन्धत्वं रूपवान् घटः, जातिमान् पट इत्यादौ आश्रयता बुद्धिनियामकत्वात् प्रसिद्धम् । इदमेव भेदाभेदघटितं नैयायिकैः समवायशब्देन व्यवह्रियते । तस्यातिरिक्तत्वाङ्गीकारश्च अनवस्थापत्त्यादिदूषणग्रस्तः । ततश्च प्रकृतेऽपि शब्दार्थयोः दीपादिगतशक्तेः दीपालोकसम्बद्धविषयप्रकाशकत्वस्यैव दृष्टत्वेन पदशक्तेरपि पदसम्बद्धविषयप्रकाशकत्वसम्भवेन अन्यसम्बन्धे प्रमाणाभावेन पूर्वोक्तानुमानेन च तादात्म्यसम्बन्ध एवाङ्गीक्रियते ।

राहोः शिर इत्यत्र औपाधिकभेदेन षष्ठ्युपपादानपरभाष्यप्रामाण्यात्तु केवलाभेदस्य सम्बन्धत्वं नाङ्गीक्रियते, नतु भेदाभेदघटितस्य तादात्म्यस्य तद्भाष्येण सम्बन्धत्वनिरासः। अन्यथा उपाधीभूतशिरश्चैतन्यसमूहस्यापि राहुपदार्थत्वे समूहसमूहिनोरात्यन्तिकभेदस्य कस्यापि मतेऽभावेन समवायाङ्गीकर्तृभिरपि तत्र समवायानङ्गीकारेण अन्यसम्बन्धस्य तत्रासत्वेन षष्ठ्युपपादनं भाष्योक्तमसङ्गतमेव स्यात् । तस्माद् भेदाभेदघटितस्य तादात्म्यस्य सम्बन्धत्वं निर्दुष्टम् । तत्र क्वचिद्भेदः कल्पनिकः, अभेदो वास्तवः। यथा गुणगुण्यादौ । क्वचिदभेदः काल्पनिकः भेदो वास्तवः । यथा शब्दार्थयोः शब्दादेव अर्थसृष्टिरिति पक्षे तु तत्राप्यभेदो वास्तवः भेद एव काल्पनिकः भेदो वास्तवः भेद एव काल्पनिकः । तत्राभेदस्य उद्भूतत्वविवक्षया "वृद्धिरादैच्" "रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः" इत्यादिनिर्देशाः । भेदस्योद्भूतत्वविवक्षया च "तस्य वाचकः प्रणवः" "ओ वाचकं प्रगृह्यपदम्"इत्यादयः प्रयोगाः । एवं गुणगुण्यादिस्थलेऽप्युदाहार्यमित्यलम् ।

तदुक्तं हरिणा—

उपकारः स यत्रास्ति धर्मस्तत्रानुगम्यते ।
शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः ॥ इति ॥

उपकारः-उपकार्योपकारकयोर्बोधशक्त्योरुपकारस्वभावः सम्बन्धो यत्रास्ति तत्र धर्मः शक्तिरूपः कार्यं दृष्ट्वा ऽनुमीयते । असौ सम्बन्धः शक्तीनामपि कार्यजनने उपकारकः गुणानामपि द्रव्याश्रितत्वनियामक इति हेलाराजः ।

स सम्बन्धः पदे वाक्ये च । तदाह न्यायभाष्यकार-"समयज्ञानार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणं,वाक्यलक्षणाया वाचो ऽर्थलक्षणम्" इति । अनेन पदेष्विव वाक्येष्वपीश्वरसमय इति स्पष्टमेवोक्तम् । तस्मादितरेतराध्यासः सङ्केतस्तन्मूलकं तादात्म्यञ्च सम्बन्ध इति सङ्क्षातार्थः । तदुक्तं पातञ्जलभाष्ये, "सङ्केतस्तु पदार्थयोरितरेतराध्यासरूपः(१)स्मृत्यात्मको योऽयं शब्दः सोऽर्थो योऽर्थः स शब्दः" इति । स्मृत्यात्मक इत्यनेन ज्ञातस्यैव सङ्केतस्य (२)शक्तिबोधकत्वं दर्शितम् ।

उक्त ईश्वरसङ्केत एव शक्तिरिति नैयायिकमतं न युक्तम् । 'अयमेतच्छ-

---

*उपकार इति* । यत्र उपकारस्वभावः सम्बन्धो अस्ति तत्र शक्त्याख्यो धर्मं अनुमीयते । असम्बद्धानामुपकाराभावात् । न च शक्तिरेव सम्बन्धः, शक्तीनामप्याधारपारतन्त्रे कार्यजनने च सम्बन्धस्यैव नियामकत्वात् ।

*उपकार्यः* । अर्थः । *उपकारकः*-शब्दः । *कार्यम्*-( अर्थः ) उपकारकम् । *शक्तीनामपीति* । सम्बन्धसत्वे एव शक्तेरपि कार्यजनकत्वादित्यर्थः ।

*अर्थलक्षणम्*। अर्थप्रतिपादकं शास्त्रम् । एतेन पदार्थे सम्बन्धग्रहवन्त्यपि पदानि वाक्यार्थे सङ्गतिग्रहानपेक्षाण्येवेति वाक्यस्फोटो नैयायिकासम्मत इति परास्तम् ।

*आध्यास इति*। कः शब्दः कोऽर्थ इति प्रश्ने घट इत्ययं शब्दः घट इत्ययमर्थ इत्येकाकारोत्तरदर्शनात्तयोः शब्दार्थयोरध्यासप्तिद्धिः । *तादात्म्यञ्चेति* । तादात्म्य-

---

( १ ) स्मृतौ आत्मा स्वरूपं यस्येत्यर्थः स्मर्यमाण इति यावत् ।

( २ ) शक्तिबोधकत्वमिति । अयं भावः—प्रत्यक्षतो दृश्यमाने एव घटे "कोऽयम्" इति "किं नामकोऽयम्" इति वा प्रश्ने "घटोऽयम्" इत्युपदेशेन "वृद्धिरादैच्" इत्याद्युपदेशेन च घटं घटपदाभिन्नत्वेनादैचश्च वृद्धिपदभिन्नत्वेनावगच्छति । तदभिन्नत्वं च तदात्मकत्वं तदात्मकत्वग्रहे च तत्र बोधात्मकघटाद्यभिव्यक्तिशक्तिं गृह्णाति, घटादौ मृदाद्यात्मकत्वग्रहे मृदादौ प्रत्यक्षात्मकघटाद्यभिव्यक्तिशक्तिमिव । अथ प्रयो-

क्य:' 'अत्रास्य शक्तिः' इत्यस्य संकेतस्य शक्तितः पार्थक्येन प्रसिद्धत्वात् । अत एव न्यायवाचस्पत्ये उक्तम्-स्वर्गादिभुवां महर्षिदेवतानामीश्वरेण साक्षादेव कृतः संकेतस्तद्व्यवहाराच्चास्मदादीनामपि सुग्रहस्तत्संकेत:'इति।

---

ञ—तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम् ।

*शक्तितः पार्थक्येनेति* । अयमेतच्छक्यः अत्रास्य शक्तिः !इत्यस्य सङ्केतस्य लोके दर्शनेन । तादृशेश्वरसङ्केतस्याप्यनुमानाच्छक्तिप्रकाशक एवेति भावः । *अत एवेति* । सङ्केतस्य शक्तिग्राहकत्वादेव *महर्षीति* । महर्ष्यादिभ्यः ईश्वरेण साक्षात् संकेतः प्रकाशित इत्यर्थः । *सुग्रहः सङ्केत इति । योगवाचस्पत्ये उक्तम्-

---

गादिना पदज्ञाने जाते शक्तिविषयकसंस्कारोद्बोधे च शाब्दबोधो जायते । स्वशक्त्या स्वसम्बद्धस्यैवाभिव्यक्तिदर्शनाद् घटादिपदशक्त्या घटादिपदसम्बद्धस्यैव घटादेः शाब्दबोधरूपाभिव्यक्तिर्वाच्या । ततश्च पूर्वोक्तरीत्या तादात्म्यसम्बन्धसिद्धिः ।

यत्रापि घटपदं घटस्य वाचकं, प्रगृह्यपदम् उञो वाचकम् , इत्युपदेशः, तत्रापि अभेद सहचरितस्यैव भेदस्य ग्रहो भवति, नतु शुद्धभेदस्य ग्रहः । शुद्धभेदग्रहे शक्तिग्रहानुपपत्तेः पटादिप्रतियोगिकशुद्धभेदवत्त्वेन गृहीते मृदादौ पटादिशक्तिग्रहस्य अजननात् निमित्तेऽतिप्रसङ्गस्तु न शङ्क्यः। उपादाने एव शक्तिस्वीकारात् । स्फोटात्मकशब्दादेव सृष्टिरिति पक्षमाश्रित्य शब्दे अर्थोपादानत्वस्य सुवचत्वात् । बौद्धस्यैव अर्थस्य शाब्दबोधविषयित्वमिति पक्षे सुतरां तत्संभवाच्च । दृष्टिसृष्टिवादे शङ्काया एवानुत्थानाच्च । एवं च व्यवहारादेरपि शक्त्यनुमानमितरेतराध्यासात्मकसङ्केतानुमानपूर्वकमेव । इतरेतराध्यासात्मकसङ्कतश्च“योऽर्थः स शब्दः यःशब्दः सोऽर्थः”इत्याकारक ईश्वरकृतः वाच्यवाचकभावरूपां शक्ति ग्राहयति । तदुक्तं पातञ्जलभाष्ये “तस्य वाचकः प्रणव”इति सूत्रे (पा०१ सू० २७) “स्थितोऽस्य वाच्यस्य वाचकेन सम्बन्धः। संकेतस्तु ईश्वरस्य स्थितमेवार्थमभिनयति । यथाऽवस्थितः पितापुत्रयोः सम्बन्धः संकेतेनावद्योत्यते, अयमस्य पिता अयमस्य पुत्र इति । अनेन च ईश्वरसङ्केतस्य शक्तिग्राहकत्वं स्पष्टमेवोक्तम् । उपदेशरूपस्य पूर्वोक्तसंकेतस्य इतरेतराध्यासोल्लेखित्वात्तादात्म्यग्रहपूर्वकशक्तिग्रहजनकत्वं तस्य दर्शितम् । एतेन नैयायिकोक्तम् ईश्वरसंकेतस्य शक्तित्वं निराकृतं वेदितव्यम् । यथा घटशब्दो घटस्य वाचक इत्युपदेशरूपः संकेतः शक्तितो भिन्नः तथैव महर्षीणां साक्षाद् ईश्वरकर्तृकः तादृश उपदेशः शक्तितो भिन्न एव वाच्यः । दृष्टानुसारेणैव कल्पनाया उचितत्वात् । उक्तञ्च नागेशेन “अयमेतच्छक्योऽत्रास्य शक्तिरित्यस्य संकेतस्य शक्तितः पार्थक्येन प्रसिद्धत्वात्” इति । इच्छारूपसंकेतस्य शक्तित्वं तु प्रागेव निरस्तम् । तस्मात् इन्द्रियशक्तिवत् पदशक्तिरपि भिन्नैव तद्ग्राहकं च इतरेतराध्याससिद्धं तादात्म्यमिति सर्वं सुस्थम् ।

तस्य च तादात्म्यस्य निरूपकत्वेन विवक्षितोऽर्थः शक्यः, आश्रयत्वेन विवक्षितः शब्दः शक्त इत्युच्यते। शब्दार्थयोस्तादात्म्यादेव 'आकमश्रृणो- दथार्थं श्रृणोदिति अर्थं वदति' इत्यादिव्यवहारः। "ओमित्येका रं ब्रह्म" "रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः," "वृद्धिरादैच्" इतिशक्ति ग्राहकश्रुतिस्मृतिविषये सामानाधिकरण्येन प्रयोगश्च।

तादात्म्यं च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वमिति भेदाभेदसम- नियतम्। अभेदस्याध्यस्तत्वाच्च न तयोर्विरोधः।

यत्तु तार्किकाः, शब्दार्थयोस्तादात्म्यस्वीकारे मधुशब्दोच्चारणे मुखे मा- धुर्यरसास्वादापत्तिः, वह्निशब्दोच्चारणे मुखे दाहापत्तिरित्याहुः। तन्न। भेदाभे- दस्योपपादितत्वात्

वस्तुतो बौद्ध एवार्थः शक्यः, पदमपि स्फोटात्मकं प्रसिद्धम्, तयोस्ता- दात्म्यम्। तत्र बौद्धे वह्न्यादावर्थे दाहादिशक्तिमत्त्वाभावात्। अत एव "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति विकल्पसूत्रं सङ्गच्छते। शब्दज्ञानमात्रेणानुपाती बुद्धावनुपतनशीलो वस्तुशून्यः बाह्यार्थरहितः वि- शेषेण कल्प्यत इति विकल्पः, बुद्धिपरिकल्पित इति तदर्थः। अत एव—

एष वन्ध्यासुतो याति खपुष्पकृतशेखरः।

---

'सर्वे च शब्दाः सर्वार्थाभिधानसमर्थाः, इति सर्वैरर्थैः सर्वेषां शब्दानां सम्बन्धः, ईश्वर- सङ्केतस्तु प्रकाशकः' इति। अत एव 'नित्यः शब्दार्थसम्बन्धः' इति तार्किकाः।

*न तयोर्विरोध इति*। तत्र भेदस्योद्भूतत्वविवक्षया अस्यार्थस्य अयं वाचकः "ऊञः प्रगृह्यम्" तस्य वाचक प्रणवः इत्यादौ षष्ठी। अभेदस्योद्भूतत्वविवक्षया तु प्र- थमा यथा—'रामेतिद्व्यक्षरंनाम" "वृद्धिरादैच्"इत्यादौ। *भेदाभेदस्येति*। वस्तुतो भेद एव अभेदस्तु आरोपित इति भावः।

एवमभ्युपेत्य समाहितं वस्तुतो दोषशङ्कैव नेत्याशयेन सिद्धान्तमाह—*वस्तुत इति*। *बौद्ध एवेति*। बुद्धिविषयावेवार्थशब्दौ वाच्यवाचकौ न वास्तवावित्यर्थः। *तयोरिति*। शब्दार्थयोः। *तादात्म्यम्*—अभेदः। *बुद्धिपरिकल्पित* इति। श- क्यो अर्थः बुद्धिसत्तासमाविष्ट एव न तु बाह्यसत्तासमाविष्टः। बौद्धपदार्थानङ्गिकारे घट इत्यत एव सत्तावगमेन घटोऽस्तीतिप्रयोगे गतार्थत्वादस्तीति प्रयोगानापत्तेः। सत्ता- याः विरोधाद्घटो नास्तीत्यस्यानापत्तेश्च। मम तु बुद्धिसतो बाह्यसत्तातदभावबोधनाय अस्ति नास्तीति प्रयोगः सङ्गच्छते।

*वन्ध्या सुत इति*। एषः बुद्धिस्थः वन्ध्या सुतो बुद्धिस्थः सन् याती-

कूर्मक्षीरचये स्नातः शशशृङ्गधनुर्धरः ॥

इत्यत्र वन्ध्यासुतादीनां बाह्यार्थशून्यत्वेऽपि बुद्धिपरिकल्पितं वन्ध्यासुत-शब्दवाच्यार्थमादायार्थवत्त्वात्प्रातिपदिकत्वम्। अन्यथाऽर्थवत्त्वाभावेन प्रातिपदिकत्वाभावात्स्वाद्युत्पत्तिर्न स्यात् ।

यत्तु शशशृङ्गमित्यत्र शृङ्गे शशीयत्वभ्रम इति तार्किकैरुक्तम् । तन्न । शश-शब्दवाच्यजन्तुदर्शनरूपबाधे सति शशशृङ्गं नास्तीति वाक्ये शशशृङ्गमित्यस्य प्रातिपदिकत्वानापत्तेः । अर्थपदयोस्तादात्म्यात्तत्तदर्थतादात्म्यापन्नः शब्दो भिन्न इति हेतोरर्थभेदाच्छब्दभेद इति व्यवहारः । समानाकारमात्रेण तु-एकोऽयं शब्दो बह्वर्थ इति व्यवहारः ।

सा च शक्तिस्साधुष्विवापभ्रंशेष्वपि, शक्तिग्राहकशिरोमणेर्व्यवहारस्य तुल्यत्वात् । व्यवहारदर्शनेन च पूर्वजन्मानुभूतशक्तिस्मरणम् । अत एव बालानां तिरश्चां चान्वयबोधः । न हि तेषां तदैव तत्सम्भवः ।

यत्तु तार्किकाः—असाधुशब्देन साधुस्मरणद्वाराऽर्थबोध इत्याहुः । तन्न । साधुस्मरणं विनाऽपि बोधानुभवात् । तद्वाचकसाधुशब्दमजानतां बोधानापत्तेश्च । न च शक्तिभ्रमाद् बोधोऽसाधुशब्देष्विति वाच्यम् । निस्सन्देहप्रत्ययस्य बाधकं विना भ्रमत्वायोगात् । अत एव स्त्रीशूद्रबालादीनामुच्चारिते साधा

---

ति तदर्थः । *बुद्धिपरिकल्पितमिति* । इच्छादीनामन्तःकरणनिष्ठतया तत्र विषयस्य सामानाधिकरण्येनैव कारणत्वौचित्येन बौद्धपदार्थसत्तावश्यकीति भावः ।

*अर्थभेदाच्छब्दभेद इति* । तादात्म्यमूलकस्य सम्बन्धत्वे अर्थभेदात्तादात्म्यापन्नशब्देषु भेदौचित्येन अर्थभेदाच्छब्दभेद इत्युपपद्यत इति भावः । नन्वस्मिन्पक्षे 'एकः शब्दो नानार्थः, अज्ञा पादा माषा' इति भाष्यं, कथमुपपद्यतामित्यत आह—*समानाकारमात्रेणेति* ।

एवं शक्तिं निरूप्य । तदाश्रयमाह—*सा चेति* । वाच्यवाचकभावाख्येत्यर्थः । *व्यवहारदर्शनेनेति* । व्यवहारदर्शनमुद्बोधकविधया स्मारकमेवेति लाघवं, जीवनादृष्टमेवोद्बोधकमित्यर्थः । *अत एवेति* । पूर्वजन्मानुभूतस्मरणस्वीकारादेव । अन्यथा इष्टसाधनताज्ञानाभावात्स्तनपानादौ प्रवृत्तिर्न स्यात् । पश्वादीनां जडप्रायाणां प्रतिनियतजात्यनुसारेणैव नियतैव काचित्प्रतिभा बोध्यते, अतस्तेषामप्यनादिवासनैव बीजमिति भावः । *तदैव*—आद्यबोधकाले एव । *तत्सम्भवः*—शक्तिग्रहसम्भवः ।

*असाधुशब्देनेति* । असाधोः साधुप्रकृतिकत्वात्सादृश्येनेति भावः । *भ्रम-

वर्थसंशये तदपभ्रंशेनार्थनिर्णयः। अत एव "समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः" इति भाष्यम्,

वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः।

इति हरिकारिका च सङ्गच्छते। अत एवार्यम्लेच्छाधिकरणं सङ्गच्छते। तत्र हि यद्यपि आर्या यवशब्दं दीर्घशूके प्रयुञ्जते, म्लेच्छास्तु प्रियङ्गौ प्रयुञ्जते, तमेव च बुध्यन्ते, तथाऽप्यार्यप्रसिद्धेर्बलवत्त्वाद् वेदे दीर्घशूकपरतैवेति सिद्धान्तितम्। तत्र तु म्लेच्छबोधस्य शक्तिभ्रममूलकत्वेन भ्रान्तिविषयरजतज्ञानस्येव म्लेच्छप्रसिद्धेर्वस्तवसावकतयाऽऽर्यम्लेच्छप्रसिद्ध्योः कस्या बलवत्त्वमितिविचारासङ्गतिः स्पष्टैव।

साधुत्वं च व्याकरणान्वाख्येयत्वं पुण्यजनकतावच्छेदकधर्मवत्त्वं वा। तद्भिन्नत्वमसाधुत्वम्।

---

त्वायोगादिति*। वाचकस्य व्यञ्जकत्वे अलङ्कारिकाणां प्रकृतभाष्योदाहरणस्यासङ्गत्यापत्तेश्च, तत्तद्देशीयशिष्टानां तत्तद्भाषासु जायमानस्य निर्विचिकित्सशक्तत्वप्रत्ययस्य बाधकं विना भ्रमत्वायोगाच्चेत्यपि बोध्यम्। *अत एवेति*–अपभ्रंशे शक्तिस्वीकारादेव, प्रयुक्ते साधौ स्त्रीशूद्रबालानामर्थसंशये अपभ्रंशेन शब्देन निर्णय इति भावः॥ *भाष्यमिति*। तत्र पस्पशाह्निके व्याकरणप्रयोजनकथनावसरे लोकव्यवहाराद्युपायान्तरेणार्थबोधजनकशक्तिग्रहस्य सिद्धावनर्थकं व्याकरणमिति शङ्कायां शास्त्रीयप्रक्रियास्मरणपूर्वकप्रयोगे एव धर्मोत्पत्तिरित्यभिप्रायेणोक्तं संगच्छते। शब्दैः अपशब्दैश्च समानायामर्थावगतौ सत्यां व्याकरणशास्त्रेण धर्मनियमः क्रियते इति भावः।

*वाचकत्वेति*। अयम्भावः—अपभ्रंशानां शब्दानामशक्तत्वे ततो बोध एव न स्यात्। न च अपभ्रंशशब्देन साधुशब्दस्मरणाद्बोधः स्यादिति वाच्यम्। तत्तदर्थबोधकत्वेन ग्रहशून्यानां पामराणामपि बोधात्। एवं च वैयाकरणानां मते अपभ्रंशेष्वपि शक्तिरस्ति, परन्तु अपभ्रंशानां पुण्यजनकत्वं साधुत्वं नास्तीति हरिकारिकाप्यत्र परमानुकूलेति। *नियम इति*। अस्तु किल अपभ्रंशादर्थावगमः। शास्त्रेण धर्मनियमः क्रियते साधुभिरेवार्थो वक्तव्यो नासाधुभिः, एवं क्रियमाणमभ्युदयकारि भवतीति भावः।

*म्लेच्छास्त्वति*। म्लेच्छपदेन अनार्या अत्र विवक्षिताः।

*साधुत्वमिति*। साधुत्वञ्च—व्याकरणव्यङ्ग्यार्थविशिष्टशब्दनिष्ठः पुण्यजनकतावच्छेदकजातिविशेषः। अत्र "एकः पूर्वपरयोः" इतिसूत्रभाष्यस्था श्रुतिः—"एकः शब्दः सम्यक् ज्ञातः शास्त्रान्वितः सुष्ठुप्रयुक्तः स्वर्गे लोके च कामधुक् भवति" इति।

सा च शक्तिस्त्रिधा, रूढिर्योगो योगरूढिश्च । शास्त्रकल्पितावयवार्थभानाभावे समुदायार्थनिरूपितशक्ती रूढिः, यथा मणिनूपुरादौ। शास्त्रकल्पितावयवार्थनिरूपिता शक्तिर्योगः, यथा पाचकादौ । शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपिता शक्तिर्योगरूढिः, यथा पङ्कजपदे । तत्र पङ्कजनिकर्तृ पद्ममिति बोधात् । पद्मेऽनुपपत्तिप्रतिसन्धानं सम्बन्धप्रतिसन्धानं च विना न लक्षणावसरः, क्वचित् तात्पर्यग्राहकवशात्केवलरूढ्यर्थस्य केवलयोगार्थस्य च बोधः,

'भूमौ पङ्कजमुत्पन्नं कल्हारकैरवमुखेष्वपि पङ्कजेषु' इत्यादौ। स्पष्टं चेदम् "आहौद्" इति सूत्रे भाष्ये । अश्वगन्धादिपदमोषधिविशेषे रूढम्, अश्वसम्बन्धिगन्धवत्तया वाजिशालाबोधे यौगिकम्। इदं यौगिकरूढमित्युच्यते । एवं मण्डपपदं गृहविशेषे रूढं, मण्डपानकर्त्तरि यौगिकम् ।

सैषा शक्तिः संयोगादिभिर्नानार्थेषु नियम्यते ।

तदुक्तं हरिणा—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ इति ॥

एते संयोगादयो नानार्थेषु शब्देषु शब्दार्थस्यानवच्छेदे सन्देहे तदपा-

---

*साचेति* । पूर्वोक्ता च । *शक्तिरिति* । तत्स्वरूपे निरूपिते विशेषजिज्ञासार्थं तद्भेदं दर्शयति । *रूढिरिति* । समुदायार्थमात्रबोधकपदे शक्तिः—रूढिरित्यर्थः । ननु प्रकृतिप्रत्ययविभागस्यापारमार्थिकत्वात्कथं रूढ्यरूढिविभागः इत्यत आह— *शास्त्रकल्पितेति* । ननु पङ्कजपदस्य पद्मत्वविशिष्टे लक्षणैवास्तु किं समुदायःशक्त्येत्यत आह—*पद्मेति* । *लक्षणावसरेति* । लक्षणायाः अन्वयानुपपत्तिमूलकत्वादिति भावः। अस्माकं मतेन लक्षणाया अभाव एव इत्यपि बोध्यम् ।

*भूमौ पङ्कजमिति* । इदं केवलरूढ्यर्थबोधकस्योदाहरणम् । अत्र योगार्थस्य बाधः । *कल्हारेति* । कल्हारे कैरवे कुमुदे अवयवार्थमादायैव प्रयोगः । अर्थभेदाच्छब्दभेदः इतिमते उक्तान्तर्भावसम्भवान्न चतुर्थोऽतिरिक्तः शब्दः, इति चतुर्धा तद्विभागोऽयुक्त इति सूचयन्नाह-*अश्वगन्धादिति* । अर्थभेदेऽपि शब्दैक्यमिति मतेनाह-*इदमिति* ।

करणद्वारा विशेषार्थनिर्णायका इति तदर्थः। संयोगविप्रयोगयोरुदाहरणे सव-त्सा धे(१)नुरवत्सा धेनुरिति। साहचर्यस्य रामलक्ष्मणाविति। साहचर्यं साहश्यं सहशयोरेव सहप्रयोग इति नियमात्। रामार्जुनगतिस्तयोरित्यादौ विरोधेन तत्। अञ्जलिना जुहोति अञ्जलिना सूर्यमुपतिष्ठत इत्यत्र जुहोतीत्यादिपदार्थवशाद् अञ्जलिपदस्य तत्तदाकाराञ्जलिपरत्वम्। सैन्धवमानयेत्यादौ प्रकरणेन तत्। "अक्ताः श(२)र्करा उपदधाति" इत्यादौ तेजो वै घृतम्" इति घृतस्तुतिरूपाल्लिङ्गादक्ता इत्यस्य घृतसाधनकाञ्जनपरत्वम्। रामो जामदग्न्य इति जामदग्न्यपदसन्निधानाद्रामः परशुरामः। अभिरूपाय कन्या देया इत्यादौ अभिरूपतरायेति सामर्थ्यात् प्रतीयते।

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा।
यश्चैनं गन्धमाल्याद्यैः सर्वस्य क(३)टुरेव सः॥

इत्यत्रौचित्यात् परशुनेत्यस्य छेदनार्थत्वम् मधुसर्पिषा इत्यस्य सेच-

---

*विशेषार्थनिर्णायका इति*। उपस्थितानामनेकेषामेकतरमात्रार्थतात्पर्यनिर्णयद्वारा न्मात्रार्थविषयकान्वयबोधजनका इति भावः। अत्र सामर्थ्यमेवैकं मुख्यं निर्णायक-संयोगादयस्तद्व्यञ्जकप्रपञ्चः। संयोगादिभिः सामर्थ्यस्यैवाभिव्यक्तेरितिपरे। *सव-सेति*। धेनुशब्देन नवप्रसूता सर्वा एव गृह्यत इति मते इदम्। *अवत्सेति* निषे-स्य प्राप्तिपूर्वकत्वात् अवत्सापि गौरेवोच्यते इति भावः। *रामलक्ष्मणाविति*। ननु मसाहचर्याल्लक्ष्मणो दाशरथिः, लक्ष्मणसाहचर्याच्च रामो दाशरथिर्ग्राह्य इति अन्यो-याश्रय इति चेन्न। रामलक्ष्मणावित्यत्र साहचर्येण उभयोर्युगपदेव नियमनमिति वीकारात्। साहचर्यं न सहचरता "दीधीवेवीटाम्" इत्यादावसम्भवादित्याह—साहश्यमिति*। रामार्जुनेति*। अत्र रामार्जुनयोरिव तयोर्गतिरिति कस्यचिदुप-ायां सहशलक्षणया विरोधात् भार्गवकार्तवीर्ययोर्बोध इति भावः। *सैन्धवमिति*। गोजनकाले नाश्वबोध इति भावः। *लिङ्गादिति*। संयोगातिरिक्तसम्बन्धेन सम्ब-द्धो व्यावर्तकधर्मो लिङ्गम्। यथाकुपितो मकरध्वज इत्यत्र समुद्रव्यावृत्तात्कोपात्कामे। सन्निधानादिति*। सामानाधिकरण्यादिति भावः। तेन सशङ्खचक्रो हरिरित्यत्र न

---

(१) सवत्सा इत्युक्ते धेनुरेव प्रतीयते इत्यर्थः।

(२) मृत्तिकामिश्राः क्षुद्रपाषाणाः शर्कराः।

(३) अप्रिय इत्यर्थः। कटुशब्द इत्यादाविव कटुशब्दोऽप्रियार्थकः। अन्यथा नेघण्ट्वादौ तस्य तीक्ष्णरसमरीचशुण्ठीपिप्पल्याद्यर्थकत्वेन दृष्टत्वात् तस्य च निम्बेऽ-गावादसङ्गतिः स्पष्टैवेति बोध्यम्।

नार्थत्वम्, गन्धमाल्याद्यैरित्यस्य पूजनार्थत्वम्। भात्यत्र परमेश्वर इत्यत्र राजधानीरूपदेशात्परमेश्वरपदं राजबोधकम्। चित्रभानुभातीत्यादौ रात्रावग्नौ दिवा सूर्ये। व्यक्तिलिङ्गम्। मित्रो भाति मित्रं भातीत्यादावादौ सूर्योऽन्त्ये सुहृत्। स्थूलपृषतीमित्यादौ स्वरात्तत्पुरुषबहुव्रीह्यर्थनिर्णयः॥

इति शक्तिनिरूपणम्॥

ननु लक्षणा कः पदार्थ इति चेत्,

अत्र तार्किकाः—

स्वशक्यसम्बन्धो लक्षणा। सा च द्विधा। गौणी शुद्धा च। स्वनिरूपितसादृश्याधिकरणत्वसम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका गौणी। तदतिरिक्तसम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका शुद्धा। प्रकारान्तरेणापि सा द्विविधा। अजहत्स्वार्था जहत्स्वार्था च। स्वार्थसंवलितपरार्थाभिधायिकाऽजहत्स्वार्था। तेन छत्रिणो यान्ति, कुन्तान् प्रवेशय, यष्टीः प्रवेशय, काकेभ्यो दधि रक्ष्यतामित्यादौ छत्रिसहितसेना—कुन्तास्त्रसहितपुरुष—यष्टिसहितपुरुष—काकसहितसर्वदध्युपघातकबोधः। स्वार्थपरित्यागेनेतरार्थाभिधायि-

---

दोषः। शङ्खचक्रसामानाधिकरण्याभावात्। *स्वरादिति*। कारिकायां स्वरादय इत्युक्तम्। तत्रादिना षत्वसत्वणत्वादिग्राह्यम्। तद्यथा—सुसिक्तमित्यत्र पूजार्थः सुः कर्मप्रवचनीयः, सुषिक्तमित्यत्रोपसर्गोऽन्यार्थः। प्रणायके प्रणयनक्रियाकर्तृणत्वात्। प्रनायके प्रगतनायकदेशो वधः इत्यादिबोध्यम्।

शक्तिं निरूप्य लक्षणां निरूपयति—*नन्वित्यादिना*। स्वपदेन लाक्षणिकत्वेनाभिमतं पदं ग्राह्यम्। तथाहि—'गङ्गायां घोषः' इत्यत्र स्वं गंगापदं तच्छक्यः प्रवाहोऽर्थः, तत्सम्बन्धेन तीरोपस्थितिः। अतोऽत्र तीरे शक्तिर्न कल्प्यते। सैन्धवादौ लवणाश्वयोः परस्परसम्बन्धाभावान्नानाशक्तिकल्पनम्। यद्यपि लवणाश्वयोः संयोगोऽपि सम्भवति यत्राश्वे निक्षिप्तं लवणं, तथापि निरन्तरतत्सम्बस्यैव ग्रहणतात्पर्येणार्थकथनमिति बोध्यम्। *गौणीति*। लक्ष्यमाणगुणसंबन्धस्वरूपा। यथा अग्निर्माणवक इत्यत्र। तथाहि—लक्ष्यमाणो यो गुणः शुचित्वादिः तत्सम्बन्धरूपा इत्यर्थः—शक्यसम्बन्धो लक्षणा, स च क्वचित्साक्षात्सम्बन्धः, क्वचित्परम्परासम्बन्धः, एवञ्चात्र शक्यस्याग्नेः स्वनिष्ठशुचित्ववत्त्वसम्बन्ध एव लक्षणेति। *अजहत्स्वार्थेति*। यत्र वाच्यार्थस्याप्यन्वयो भवति तत्र यथा छत्रिणो यान्तीत्यादौ। छत्र्यच्छत्रिषु गच्छत्सु बाहुल्याच्छत्रिणां छत्रिणो यान्तीत्यच्छत्रिषु यान-

काऽन्त्या । तत्परित्यागश्च शक्यार्थस्य लक्ष्यार्थान्वयिनाऽनन्वयित्वम् । तेन गां वाहीकं पाठयेत्यादौ गोसदृशलक्षणायामपि न गोस्तदन्वयिपाठनक्रियान्वयित्वम् । सा च लक्षणा तात्स्थ्यादिनिमित्तिका । तदाह—

तात्स्थ्यात्तथैव ताद्धर्म्यात्तत्सामीप्यात्तथैव च ।
तत्साहचर्यात्तादर्थ्याज् ज्ञेया वै लक्षणा बुधैः ॥ इति ।

तात्स्थ्यान्मञ्चा हसन्ति ग्रामः पलायितः । ताद्धर्म्यात्सिंहो माणवकः । गौर्वाहिकः । तत्सामीप्याद्गङ्गायां घोषः । तत्साहचर्याद्यष्टीः प्रवेशय । तादर्थ्यादिन्द्रार्था स्थूणा इन्द्रः । अन्वयाद्यनुपपत्तिप्रतिसन्धानञ्च (१)लक्षणाबीजम् ।

वस्तुतस्तु तात्पर्यानुपपत्तिप्रतिसन्धानमेव तद्बीजम् । अन्यथा गङ्गायां

---

कर्तृत्वानुपपत्त्या छत्रिपदमजहत्स्वार्थलक्षणया छत्र्यछत्र्युभयबोधकमिति भावः । *अन्त्येति* । यत्र वाच्यार्थस्यान्वयाभावस्तत्र जहल्लक्षणा । यथा—मञ्चाः क्रोशन्ति इत्यादौ । वाच्यार्थस्य मञ्चस्य क्रोशनकर्तृत्वान्वयासम्भवान्मञ्चपदं मञ्चस्थपुरुषं लक्षयति ।

*अन्वयाद्यनुपपत्तीति* । अन्वयाद्यनुपपत्तिज्ञानपूर्वकशक्यत्वेन गृहीतार्थसम्बन्धज्ञानेनोद्बुद्धशक्तिसंस्कारतो बाधे लक्षणेतिव्यवहारात् । अन्वयानुपपत्तिज्ञानपूर्वकं यत् शक्यसम्बन्धस्मरणं तेनोद्बुद्धो यः संस्कार इत्यर्थः । व्यञ्जनायामतिव्याप्तिवारणाय शक्यत्वेनेति ।

सम्प्रति लक्षणाबीजमाह—*वस्तुतस्त्वित्यादिना* । *तद्बीजमिति* । सर्वत्र सत्त्वादिति भावः । यद्यपि लक्षणाजन्यबोधे अन्वयव्यतिरेकाभ्यां मुख्यार्थबाधज्ञानं मुख्यार्थसम्बन्धज्ञानं च कारणम् । तद्बाधश्च समभिव्याहृतपदतात्पर्यविषये मुख्यार्थतावच्छेदकरूपेण मुख्यार्थासंसर्गरूपं, तेन छत्रिणो यान्ति, कुन्तान्प्रवेशय, काकेभ्यो दधि रक्ष्यतामित्यादौ छत्र्यादिमुख्यार्थानां समभिव्याहृतक्रियासु कर्तृत्वादिभिरन्वयाबाधेऽपि तत्तात्पर्यविषये मुख्यछत्र्यछत्रिगमनभोजनार्थप्रवेशदध्युपघातकावधिरक्षणेषु मुख्यार्थतावच्छेदकरूपेण तदन्वयबाधोऽस्त्येवेति तत्र छत्रिपदमेकसार्थप्रविष्टछत्रिसमुदाये लाक्षणिकमेवमन्यत्रापीति सापि सर्वत्रास्ति । *अन्यथेति* ।

---

(१) लक्षणायाः शक्यसम्बन्धस्य बीजं ज्ञापकमित्यर्थः । तथाहि–गङ्गायां घोष इत्यादौ प्रवाहादिरूपशक्यार्थोपस्थितौ तत्र अन्वयायोग्यत्वादिना तात्पर्यविषयत्वाभावे ज्ञाते गङ्गापदादेः प्रवाहादिसम्बन्धित्वेनोपस्थिततीरादिना स्वशक्यसम्बन्धरूपः सम्बन्धो गृह्यते 'तीरं गङ्गापदशक्यसम्बन्धि' इति । अनन्तरं तदुपस्थितौ अन्वयबोध्यत्वादिना तत्र तात्पर्यविषयत्वे निश्चिते तद्विषयकः शाब्दबोधो जायते इति ।

घोष इत्यादौ घोषादिपदे एव मकरादिलक्षणापत्तिस्तावताऽप्यन्यथानुपपत्ति परिहारात्। गङ्गायां पापी गच्छतीत्यादौ गङ्गापदस्य नरके लक्षणापत्तेश्च अस्माकं तु भूतपूर्वपापावच्छिन्नलक्षकत्वे तात्पर्यान्न दोषः। 'नक्षत्रं दृष्ट्वा वाचं विसृजेद्" इत्यत्रान्वयसम्भवेऽपि तात्पर्यानुपपत्त्यैव लक्षणास्वीकारात्। एकानुगमकस्वीकारेण निर्वाहेऽनेकानुगमकस्वीकारे गौरवाच्च। विशिष्टार्थबोधकशब्दस्य पदार्थैकदेशे लक्षणायां जहदजहल्लक्षणेति व्यवहरन्ति वृद्धाः। वाक्यार्थे किञ्चिदंशत्यागः किञ्चिदंशपरिग्रहश्च। अत्र ग्रामैकदेशे पटैकदेशे च दग्धे ग्रामो दग्धः पटो दग्ध इति व्यवहारः। 'तत्त्वमसि' इत्यत्र सर्वज्ञत्वाल्पज्ञत्वयोस्त्यागः शुद्धचैतन्ययोरभेदान्वयः।

स्वबोध्यसम्बन्धो लक्षणेति केचित्। गभीरायां नद्यां घोष इत्याद्यनुरोधात्। तथाहि—न तावद् गभीरपदं तीरलक्षकं, नद्यामित्यनन्वयापत्तेः। नहि तीरं नदी। अत एव न नदीपदेऽपि। गभीरपदार्थानन्वयात्। न हि तीरं गभीरम्। न च प्रत्येकं पदद्वये सा, विशिष्टनदीबोधानापत्तेः। तस्मा-

---

अन्वयानुपपत्तिज्ञानस्यैव तद्धेतुत्वे। *जहदजहल्लक्षणेति*। यत्र वाच्यैकदेशत्यागेन एकदेशान्वयः, तत्र जहदजहदिति, यथा—तत्वमसीति। अत्र तत्पदवाच्ये सर्वज्ञत्वादिविशिष्टे त्वंपदवाच्यस्यान्तःकरणादिविशिष्टस्याभेदानुपपत्त्या उभयत्र विशेषणांशपरित्यागः। तथाच—तत्पदलक्ष्यस्य शुद्धस्य त्वंपदलक्ष्येण सहाभेदान्वयोपपत्तिरित्यभिप्रायः। इदमुदाहरणं जीवब्रह्मणोरैक्यं ब्रुवतां ब्रह्मवादिनां सिद्धान्ताभिप्रायेण। *ग्रामो दग्धः इति*। ग्रामो दग्धः, पुष्पितं वनमित्यादौ दग्धादिपदानि अर्शआद्यजन्तानि; इति "अर्थवद्" सूत्रभाष्योक्तेस्तत्र लक्षणैव नेति केचित्। *तत्त्वमसीति*। यत्र हि विशिष्टवाचकः शब्दः स्वार्थे एकदेशं विहाय एकदेशे वर्तते तत्र जहदजहल्लक्षणा। यथा सोऽयं देवदत्तः इति अत्र हि पदद्वयवाच्ययोर्विशिष्टयोरैक्यानुपपत्त्या पदद्वयस्य विशेष्यमात्रपरत्वम्। यथा तत्वमसीत्यादौ तत्पदवाच्यस्य सर्वज्ञत्वादिविशिष्टस्य त्वंपदवाच्येन अन्तःकरणविशेष्टेनैक्यायोगादैक्यसिद्धयर्थं सर्वज्ञत्वाल्पज्ञत्वयोस्त्यागः, शुद्धचैतन्ययोरभेदान्वयः।

*स्वबोध्येति*। स्वं वाक्यं तेन बोध्यः ज्ञाप्यः, तेन वाक्यस्य लक्षणा। गभीरायां नद्यामिति वाक्यस्य बोध्यो गभीराभिन्ना नदी तत्सम्बन्धस्तीर इति भावः। *केचिदिति*। मीमांसकाः। *नहि तीरं नदीति*। गभीरतीरे ,नद्यामित्यर्थासम्भवात्। * न नदीपदेऽपीति*। नदीपदेन नदीतीरग्रहणे गभीरसमानाधिकरण्यासम्भव इत्यर्थः। *प्रत्येकमिति*। गभीरपदस्य गभीरतीरे नदीपदस्य नदीतीरे

ऽसमुदायबोध्यगभीरत्वविशिष्टनदीपदार्थः, तत्सम्बन्धो लक्षणेति॥ द्विरेफपदस्य स्वलक्ष्यभ्रमरशब्दवाच्यार्थे लक्षणायां लक्षितलक्षणेति व्यवहारः। स्वबोध्यपदवाच्यत्वं सम्बन्धः।

इत्यर्थः। *समुदायबोध्येति*। अत एव अर्थवादवाक्यानां प्राशस्त्ये लक्षणासिद्धिः।

परे तु शक्यतावच्छेदकारोपो लक्षणेत्याचक्षते। तथाहि-आरोपितशक्यतावच्छेदकरूपेणान्यव्यक्तिबोधे लक्षणेति यथा गङ्गायां घोषः इत्यतः शक्यतावच्छेदकप्रवाहत्वस्य तीरविशेषे आरोपाद्गङ्गात्वरूपेणैव तीरबोधो न तीरत्वरूपेण। तथा च गौर्वाहिक इतिवत्तीरे अरोपेणान्वयानुपपत्त्या प्रयुक्तमिदं वाक्यमन्यथाऽप्तोक्तत्वानुपपत्तिरतस्तीरलक्षकमिदमिति बोद्धा बुध्यतीत्यभिप्रेत्येति बोध्यम्। एवं छत्रिणो यान्तीत्यादावछत्रिषु छत्रित्वस्य काकेभ्यो दधि रक्ष्यतामित्यादौ दध्युपघातकमात्रे काकत्वारोपः। अत एव "पुंयोगादाख्यायाम्" इतिसूत्रे भाष्ये गोपीत्यादौ गोपपदस्य गोपसम्बन्धिस्त्रीत्वाश्रयगोप्यां लक्षणायामणप्रत्ययान्तसाधुतामापाद्यैतदर्थे एतदसाधुत्वमाशङ्क्य समाहितं 'नावश्यमयमेवाभिसम्बधो भवति तस्येदमिति, किन्तु तन्मूलकः सोऽयमित्यभिसम्बन्धोऽस्तीत्युक्त्वा चतुर्भिः प्रकारैस्तस्मिन्स इत्येतद्भवति ताः स्थ्यात्ताद्धर्म्यात्तत्सामीप्यात्तत्साहचर्यान्मञ्चा हसन्ति सिंहो माणवको गङ्गायां घोषः यष्टीः प्रवेशयेत्युक्तम्।

कैयटोऽपि आरोप्यते ताद्रूप्यमिति। अत एव गङ्गायां मीनघोषौस्त इत्युपपद्यते। अन्यथा गङ्गापदस्य अजहत्स्वार्थलक्षणायामपि गङ्गात्वतीरत्वोभयाश्रययोर्गङ्गातीरोभययोर्घोषमत्स्योभयान्वये एकधर्मावच्छिन्नस्य एकधर्मावच्छिन्नेऽन्वयरूपसाहित्याभावाद् द्वन्द्वान्नुपपत्तिरिति।

अत्रार्थे गौतमो ऽप्यनुकूलः-"सहचरण-स्थान-तादर्थ्य-वृत्त-मान-धारण-सामीप्य-योग-साधन-अधिपत्येभ्यो ब्राह्मण-मञ्च-कट-राजसक्तु-चन्दन-गङ्गा-शाटकान्न-पुरुषेषु अतद्भावेऽपि तदुपचार" इति। यथा—तस्य भावः-तद्धर्मः, तदभावेऽपि तदुपचार इत्यर्थः। स च धर्मारोपेण आरोपनिमित्तानि च सहचरणादीनि। यष्टीः प्रवेशयेत्यत्र भोजनकाले यष्टिधरब्राह्मणकर्मकप्रवेशनतात्पर्यान्यथानुपपत्त्या यष्टित्वारोपो-ब्राह्मणे। एवं मञ्चा क्रोशन्तीत्यादावपि बोध्यमिति दिक्।

*लक्षितलक्षणेति*। यत्र शक्यपरम्परासम्बन्धेनार्थान्तरप्रतीतिस्तत्र लक्षितलक्षणा। यथा-द्विरेफपदस्य रेफद्वये शक्तस्य भ्रमरपदघटितपरम्परासम्बन्धेन मधुकरे वृत्तिः।

ननु द्विरेफपदलक्षितेन भ्रमरपदेन शक्त्यैव भ्रमरबोधाल्लक्षणा व्यर्थेति चेन्न। द्विरेफपदवृत्त्यभावे 'प्रत्ययानां प्रकृत्यर्थान्विता' इति न्यायविरोधापत्तेः। एवञ्च द्विरेफपदस्यैव लक्षितलक्षणावृत्तिः। तथाच लक्षितस्य लक्षणेति शब्दार्थः।

प्रकारान्तरेण पुनर्लक्षणा द्विविधा । तथा हि—

प्रयोजनवती रूढा लक्षणा द्विविधा मता । इति ।

असति प्रयोजने शक्यसम्बन्धो निरूढलक्षणा । त्वचा ज्ञातमित्यादौ यथा त्वचस्त्वगिन्द्रिये । इयं तु शक्यपरपर्यायैवेति बोध्यम् । गङ्गायां घोष इत्यत्र तीरे गङ्गागतशैत्यपावनत्वादिप्रतीतिः प्रयोजनम् । गौर्वाहीक इत्यत्र सादृश्यं लक्ष्यतावच्छेदकं गवाभेदप्रत्ययः प्रयोजनम् । कुन्ताः प्रविशन्तीति भीतिपलायमानवाक्ये कुन्तविशिष्टपुरुषे कुन्तगततैक्ष्ण्यप्रतीतिः प्रयोजनमित्याहुः ।

तन्न । सति तात्पर्ये 'सर्वे सर्वार्थवाचका' इति भाष्याल्लक्षणाया अभ-

---

परे तु शक्यसम्बन्ध एव लक्षणा न तु शक्यस्य साक्षात्सम्बन्धे लक्षणा गौरवात् । तथा च परम्परासम्बन्धेन भ्रमरोपस्थापकत्वाद्द्विरेफपदस्य भ्रमरे वृत्तिः । तथा च लक्षितपदघटितलक्षणा लक्षितलक्षणेत्यर्थ इत्याहुः ।

*प्रकारान्तरेणेति* । कविवरसम्प्रदायप्रसिद्धप्रकारेणेत्यर्थः । *निरूढेति* । अनादितात्पर्यवती निरूढालक्षणा । असति प्रयोजने शक्यार्थबाधप्रतिसन्धानपूर्वकं तत्सम्बन्ध्यपरार्थबोधे निरूढालक्षणेति व्यवहारोऽन्यथा रूढिशक्तिरेवेति बोध्यम् ।

तथाचोक्तम्—

मुख्यार्थबोधे तद्युक्तो ययाऽन्योऽर्थः प्रतीयते ।
रूढेः प्रयोजनाद्वाऽसौ लक्षणाशक्तिरर्पिता ॥

इति । रूढेः अनादितात्पर्यविषयत्वादिति भावः । *त्वचा ज्ञातमिति* । त्वगिन्द्रियजन्यज्ञानीयतावदिति शाब्दबोधः । अत्र हि त्वक्पदस्य त्वगिन्द्रियेऽनादितात्पर्यं कल्प्यते । तत्पदस्य तदर्थे प्रसिद्धत्वादिति भावः । *सादृश्यमिति* । गौर्वाहिकः इति वाक्ये गोपदस्य गोसदृशार्थलाक्षणिकत्वमिति भावः । एवमग्निर्माणवकः इत्यत्रापि बोध्यम् ।

अन्ये तु उपमितसमासे एव सादृश्यं लक्ष्यतावच्छेदकमाहुः । *कुन्ताः प्रविशन्तीति* । कुन्ताः प्रविशन्तीत्यत्र भीतिपलायमानवाक्ये कुन्तानां तात्पर्यविषयकुन्तिप्रवेशे अन्वयाबाधात्कुन्तपदस्य तत्संयुक्ते पुरुषे लक्षणा कुन्तगततैक्ष्ण्यप्रतीतिः प्रयोजनमिति ध्येयम् ।

ननु यदि 'सर्वे सर्वार्थवाचकाः' इति स्वीक्रियमाणे घटपदात्पटबोधापत्तिरित्यत आह-*सति तात्पर्येति* । अत एव "वृद्धिरादैच्" ( पा० सू० १।१।१ ) इति सूत्रे भाष्ये 'अनेकशक्तेः शब्दस्य इत्युक्तं सङ्गच्छते । *अभावादिति* । एकवृत्त्यैव निर्वा-

वात्। वृत्ति द्वयावच्छेदकद्वयकल्पने (१)गौरवात्। (२)जघन्यवृत्तिकल्पनाया अन्याय्यत्वाच्च। कथं तर्हि गङ्गादिपदात्तीरप्रत्ययः। भ्रान्तोऽसि, सति तात्पर्ये 'सर्वे सर्वार्थवाचका' इति भाष्यमेव गृहाण।

तथाहि-शक्तिर्द्विविधा-प्रसिद्धाऽप्रसिद्धा च। आमन्दबुद्धिवेद्यात्वं प्रसिद्धात्वम्। सहृदयहृदयमात्रवेद्यात्वमप्रसिद्धात्वम्। तत्र गङ्गादिपदानां प्रवाहादौ प्रसिद्धा शक्तिः, तीरादौ चाप्रसिद्धेति किमनुपपन्नम्।

ननु 'सर्वे सर्वार्थवाचका' इति चेद् ब्रूषे तर्हि घटपदात्पटप्रत्ययः किन्न स्या-

---

दे अनेकवृत्तिकल्पनमन्याय्यमिति भावः। *अवच्छेदकेति*। अवच्छेदकभेदे शक्तिभेद इति तार्किकादिसिद्धान्तः। लाघवाच्छक्तिरेकैवेति शाब्दिकराद्धान्तः। न च 'अन्यायश्चानेकार्थत्वम्' इति वाच्यम्? भवन्मतेऽपि तुल्यत्वात्। एतावान् परं भेदः-भवन्मते वृत्तिभेदेन मम मते एकया वृत्त्येति। *गौरवादिति*। लक्षणास्वीकारे शक्तिजन्योपस्थितिं विनाऽपि लक्षणाजन्योपस्थितेः, शाब्दबोधसम्भवेन परस्परं व्यभिचारः तद्वारणार्थमव्यवहितांशनिवेशेऽनन्तकार्यकारणभावेन गौरवञ्च। अपि च पदार्थोपस्थितिं प्रत्यपि शक्तिज्ञानत्वेन लक्षणाज्ञानत्वेन च हेतुत्वे गौरवं व्यभिचारश्च। यद्यपि अस्मन्मते इदम्पदमेतदर्थबोधकमिति शक्तिज्ञानेन सामान्यतः कार्यकारणभावकल्पनेऽपि तत्तदर्थभेदेनानन्तकार्यकारणकल्पनं, तत्रापि च व्यभिचारवारणाय अव्यवहितोत्तरत्वनिवेशे ऽपरं गौरवं तुल्यं, तथापि परमते सर्वस्याप्येतस्य सत्त्वेन अधिकस्य लक्षणाकार्यकारणभावगौरवस्य सत्त्वेनास्मन्मते एव लाघवमिति भावः। *जघन्येति*। श-

---

(१) अयं भावः—प्रवाहादिसम्बन्धित्वेनोपस्थिततीरादौ गङ्गापदादेः 'सर्वे सर्वार्थवाचकाः" इति भाष्यात् सामान्यतः पूर्वमेव ज्ञातः शक्तिरूपः सम्बन्ध एव कल्पनीयो, न तु शक्यसम्बन्धरूपः। तथा सति तयोरुभयोः शाब्दबोधजनकपदार्थोपस्थितिजनकपदपदार्थसम्बन्धत्वरूपं शाब्दबोधजनकपदपदार्थसम्बन्धत्वरूपं वा वृत्तित्वं कल्पनीयम्, शाब्दबोधकारणतावच्छेदकत्वम् उपस्थितिकारणतावच्छेदकत्वं च शक्तित्वशक्यसम्बन्धत्वयोरुभयोः कल्पनीयम्, इति गौरवम्। शक्तिकल्पनापक्षे तु तस्या एव वृत्तित्वकल्पनं, तत्त्वस्यैव च तत्तदवच्छेदकत्वकल्पनमिति लाघवम्। तन्मते अन्यदपि गौरवं भूषणादौ स्पष्टं प्रतिपादितं तत् तत एवावगन्तव्यम्। व्यवहारादिना गङ्गापदादौ तीरादिशक्तेः पूर्वं विशेषरूपेणाग्रहेण अप्रसिद्धत्वात् लक्षणापदेन व्यवहार इति बोध्यम्।

(२) अन्याय्यत्वादिति। पूर्वोपस्थितशक्तिसम्बन्धस्य वृत्तित्वकल्पनमुपेक्ष्य पश्चादुपस्थिततद्घटितसम्बन्धस्य वृत्तित्वकल्पनाया अनुचितत्वादित्यर्थः।

दिति चेन्न। सति तात्पर्ये इत्युक्तत्वात्तात्पर्याभावादिति गृहाण। तात्पर्यं चात्र ऐश्वरं देवतामहर्षिलोकवृद्धपरम्परातोऽस्मदादिभिर्लभ्यमिति सर्वं सुस्थम् ।

इति लक्षणानिरूपणम् ।

ननु व्यञ्जना कः पदार्थः ? उच्यते । मुख्यार्थबाधनिरपेक्षबोधजनको मुख्यार्थसम्बन्धासम्बन्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना। अत एव निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यता च हर्यादिभिरुक्ता। द्योतकत्वं च स्वसमभिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वमिति। वैयाकरणानामप्येतत्स्वीकार आव-

---

क्त्यैव कार्यनिर्वाहे वृत्तिद्वयकल्पनं जघन्यमिति भावः। *तात्पर्याभावादिति*। न च तस्य मुख्यत्वापत्तिर्घटपदं पटवाचकमिति व्यवहारापत्तिश्चेति वाच्यम्। यदर्थे यत्पदं प्रसिद्धं तदर्थे तत्पदवाच्यत्वं तदर्थवाचकत्वं च तत्पदस्येष्यते। तत्पदादेव जायमानस्तदर्थबोधो मुख्य इति स्वीकारात्। प्रसिद्धिरेव शक्तेर्वाचकभावनियामिकेत्यवबोध्यम्। एतेन तदर्थनिरूपितप्रसिद्धशक्तिमत्वं तदर्थवाचकत्वं तत्पदनिष्ठप्रसिद्धशक्तिनिरूपकत्वं तत्पदवाच्यत्वमिति फलितम्। प्रसिद्धिश्चात्र बाहुल्येन प्रयोगादेवानुमातव्येति बोध्यम्। *सर्वं सुस्थमिति*। परमते शक्तिज्ञानत्वेनैव हेतुता, शक्यसम्बन्धरूपलक्षणायां शक्तेरपि प्रवेशादिति वक्तुं शक्यम्। परन्तु तन्न योग्यं, शक्तिज्ञानपदार्थोपस्थित्योः कार्यकारणभावे समानविषयत्वस्यावश्यकत्वात्। एवं च शक्तिज्ञानत्वेनैव हेतुत्वस्य वक्तुमशक्यत्वात्। लक्षणावृत्तिमस्वीकृत्य शक्तिजन्योपस्थितित्वेनैव हेतुत्वकल्पनमुचितमिति दिक्।

इत्यर्थदीपिकायां लक्षणाविचारः।

लक्षणयैव व्यञ्जना गतार्थेति तार्किकमतं निराकर्तुमाह—*मुख्यार्थेति*। 'निःशेषच्युतचन्दनं स्तनतटम्' इत्यादौ मुख्यार्थबाधाभावेऽपि अधमपदार्थपर्यालोचनया व्यङ्ग्यार्थप्रतीतेर्व्यञ्जनावृत्त्यन्तरमेवेति भावः। *सम्बद्धेति*। मुख्यार्थसम्बन्धाभावाद्रूढ्यादेरभावाच्च न लक्षणेत्यर्थः। *वक्त्रादीति*। वक्त्रादीनां वैशिष्ट्यस्य ज्ञानेन प्रतिभया च उद्बुद्धः संस्कार इत्यर्थः। व्यञ्जकत्वलक्षकत्वयोर्वैलक्षण्यं दर्शयति—*अत एवेति*। *निपातानामिति*। तेषां मुख्यार्थाभावेन लक्षणया असम्भवात् व्यञ्जकतारूपा द्योतकतैवेत्यर्थः। *स्फोटस्येति*। लक्षणायास्तु तत्र न सम्भवः। *वैयाकरणानामिति*। न केवलं कवीनामेव किन्तु वैयाकरणानामपि सा व्यञ्जना आवश्यकी,

श्यकः । एषा च शब्दतदर्थपदपदैकदेशवर्णरचनाचेष्टादिषु सर्वत्र, तथैवानुभवात् । वक्त्रादि(१)वैशिष्ट्यज्ञानं च व्यङ्ग्यविशेषबोधे सहकारीति न सर्वत्र तदपेक्षेत्यन्यत्र विस्तरः ।

यत्तु तार्किकाः लक्षणयैव गतार्था व्यञ्जनेति न सा स्वीकार्येत्याहुः ।

---

यतो व्यञ्जकत्वमेव द्योतकत्वमित्यर्थः । लक्षणाव्यञ्जनयोर्वैलक्षण्यं दर्शयति—*एषा चेति* । लक्षणा पदनिष्ठा व्यञ्जना तु एकदेशनिष्ठाऽपीत्यर्थः। अत्रेदं बोध्यम्—व्यञ्जनासामान्यलक्षणं अर्थविषयकः प्रतिभोद्बुद्धः संस्कारविशेष इत्येव, अनतिप्रसक्तत्वात् दीक्षिताद्युक्तलक्षणमतेऽनतिप्रसङ्गाय मुख्यार्थेति । मध्यमं तु स्वरूपकीर्तनम् । तृतीयं तु सहकारि । एवञ्च नियन्त्रितार्थविषयकधीजनकत्वं शब्दव्यञ्जना । वक्त्रादिवैलक्षण्यहेतुका या प्रतिभाशालिनामन्यार्थधीस्तद्धेतुव्यापारत्वमर्थव्यञ्जना । अर्थस्येत्यनेन शब्दव्यञ्जनानिरासः । एतेषां न प्रत्येकमेव व्यञ्जकत्वं; किन्तु मिलितानामपीति दिक् । *इत्यन्यत्रेति* । गुरुमञ्जूषादावित्यर्थः ।

*तार्किका इति* । अत्रालङ्कारिकाः पुनरेवमाहुः 'तीरे घोषः' इति प्रयोगे स्वायत्ते 'गङ्गायां घोषः' इत्यनन्वितामिधानं शैत्यपावनत्वादिप्रतीत्यर्थं व्यञ्जनावश्यिका । न च सा प्रतीतिर्लक्षणयाऽप्युपपद्यते । केवलतीरलक्षणया एवानुपपत्तिपरिहारे शैत्यपावनत्वादिविशिष्टलक्षणायां मानाभावात् । तस्माद्व्यञ्जनावृत्तिरवश्यमङ्गीकर्तव्येति । तन्मतं निराकुर्वन्ति तार्किकाः—व्यञ्जना हि शक्तिलक्षणान्तर्भूता शब्दशक्तिमूला, अर्थशक्तिमूला च अनुमानादिना अन्यथा सिद्धा । तथा हि—व्यञ्जके नानार्थस्थले 'दूरस्था भूधरा रम्याः' इत्यादौ भूधरशब्देन पर्वतानामिव राज्ञामपि शक्त्यैव प्रतीतिः सम्भवति । 'गङ्गायां घोषः' इत्यादौ तु शैत्यपावनत्वादिविशिष्टतीरप्रतीतिरपि लक्षणासाम्राज्यादेव । तत्र लक्षणाकल्पिकायाः तात्पर्यानुपपत्तेरेव सद्भावात् किमतिरिक्तव्यञ्जनयेति । ननु शब्दशक्तिमूलाया व्यञ्जनाया अन्यथासिद्धत्वेऽपि अर्थशक्तिमूलायास्तस्या नान्यथासिद्धिः । तथाहि—

'गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्'

---

(१) वक्त्रादयश्च वक्तृबोद्धव्यकाकुवाक्यवाच्यान्यसन्निधिदेशकालप्रस्तावचेष्टादयः । प्रस्तावः प्रकरणम् , इतरे प्रायः प्रसिद्धाः । ते चेमेऽर्थशक्तिमूलव्यञ्जनयाऽर्थावबोधे सहकारिण इति केचित् । अपरे तु शब्दशक्तिमूलव्यञ्जनास्थलेऽप्येषां सहकारिता । अत एव बालकादिना प्रयुक्ते 'सुरभिमांसं भवान् भुङ्क्ते' इति वाक्येऽश्लीलार्थान्तरप्रतीतिः, न तु गुर्वादिप्रयुक्ते इत्याद्यन्यत्र विस्तरः ।

तन्न। लक्षणाया मुख्यार्थबाधपूर्वकलक्ष्यार्थबोधकत्वात्। मुख्यार्थसम्बद्धार्थस्यैव लक्षणाया बोधकत्वात् व्यञ्जनाया अतथात्वेन तदनन्तर्भावाच्चेति दिक्।

इति व्यञ्जनाविचारः

ननु कोऽयं वृत्त्याश्रयः शब्दः। वर्णाः प्रत्येकमिति चेद्, न। द्वितीयादिवर्णोच्चारणवैयर्थ्यापत्तेः। नापि वर्णसङ्घातः। उच्चरितप्रध्वंसित्वेन यौगपद्यासम्भवात्। अभिव्यक्तेरुत्पत्तेर्वा क्षणस्थायित्वात्क्षणात्मककालस्य प्रत्यक्षायोग्यत्वेन तदवच्छिन्नवर्णस्याप्यप्रत्यक्षत्वात्। उच्चारणाधिकरणकालोत्तरकालवृत्तिध्वंसप्रतियोगित्वमुच्चरितप्रध्वंसित्वम्। "इको यणचि" इत्यादौ "तस्मिन्"इतिपरिभाषोपस्कृतवाक्यार्थेऽयं पूर्वोऽयं पर इति नष्टस्य प्रत्यक्षविषयेदंशब्देन पौर्वापर्यव्यवहारायोगाच्च।

---

इत्यादौ 'हे प्रिय भवद्गमनोत्तरं मम प्राणवियोगो भविष्यति। अतो न गन्तव्यम्' इत्याद्यर्थो व्यज्यते। नह्यत्र शक्तिलक्षणाभ्यां निर्वाहः। इत्थं च व्यञ्जनाया आवश्यकतेत्यपि न वाच्यम्। अनुमानात्। अनुमानाकारस्तु इयं मदीयगमनोत्तरकालिकप्राणवियोगवती। विलक्षणशब्दप्रयोक्तृत्वात् इत्यादिरूपः। आदिना सम्भावनादिपरिग्रहः।

इत्यर्थदीपिकायां व्यञ्जनाविचारः।

अथ वाचकत्वन्निरूपयति—*नन्वित्यादिना*। *कोऽयमिति*। अखण्डपक्षे आभ्यन्तरः स्फोटो जातिव्यक्ती बाह्यस्फोटाविति त्रीणि वाक्यलक्षणानि। सखण्डपक्षे तु नियतसाधन आख्याताशब्दपदक्रमो वापदसङ्घातो वा आद्यमेव पदं वा सर्वाणि पदानि वेति पञ्च वाक्यलक्षणानि। तत्रैषु अष्टसु पक्षेषु कः पक्षो युक्तः इति प्रश्नाशयः। वर्णस्फोटवादिमतं द्वेधा खण्डयति क्रमेण—*वर्णाःप्रत्येकमित्यादिना*। *क्षणस्थायित्वादिति*। क्षणशब्देन तदाधारः कालो ग्राह्यः। क्षणो नाम शब्दतन्मात्राद्वारा प्रकृतेः परिणामविशेषः। क्षणाधाररूपकालस्य परमाकर्षावधिः। स च न प्रत्यक्षः। अतिसूक्ष्मत्वात् किन्तु तत्समूहरूपः काल एवेति भावः। ननु उच्चारणप्रध्वंसयोर्यौगपद्यमयुक्तमत आह—*उच्चारणाधिकरणेत्यादिना*। *प्रत्यक्षविषयेति*। प्रत्यक्षविषयो य इदंशब्दस्तद्विषयो यो अयं पूर्वं इत्यादिरभिलापस्तद्विषयस्य पौर्वापर्यस्य ज्ञानं न सम्भवतीत्यर्थः। *पौर्वापर्येति*। एकैकवर्णवर्ति वागिन्द्रियमेकमेव वर्णमुच्चारयति; न द्वौ वर्णौ

यत्तु तार्किकाः-वर्णानामनित्यत्वेऽपि उत्तरोत्तरवर्णे पूर्वपूर्ववर्णवत्त्वमव्यवहितोत्तरत्वसम्बन्धेन संस्कारवशाद् गृह्यत इति पदस्य प्रत्यक्षत्वाच्छाब्दबोधः। यद्वा पूर्वपूर्ववर्णजाः शब्दाः शब्दजशब्दन्यायेन चरमवर्णप्रत्यक्षपर्यन्तं जायमाना एव सन्तीति न पदप्रत्यक्षानुपपत्तिः।

यद्वा पूर्वपूर्ववर्णानुभवजन्यसंस्कारसध्रीचीनचरमवर्णानुभवतः शाब्दबोध इत्याहुः॥

तन्न। आद्येऽयं पूर्वोऽयं पर इत्यभिलापासम्भवेन अव्यवहितोत्तरत्वसम्बन्धायोगात्। नष्टविद्यमानयोरव्यवहितोत्तरत्वसम्बन्धस्य वक्तुमशक्यत्वाच्च। द्वितीये शब्दजशब्दन्यायेन पदप्रत्यक्षोपपादनेऽपि पदस्याविद्यमानत्वेन तत्र शक्त्याश्रयत्वस्य ग्रहानुपपत्तेः। अविद्यमाने आश्रयत्वाङ्गीकारे नष्टो घटो जलवानित्याद्यापत्तेश्च। तृतीये येन क्रमेणानुभवस्तेनैव क्रमेण तत्संस्कारस्थितिरित्यत्र विनिगमकाभावात् सरो रसो नदी दीन इत्यादौ विपरीतसंस्कारोद्बोधेन प्रत्येकमन्यार्थप्रत्ययापत्तेः। उत्पत्तिविनाशवद्वर्णसमुदायरूपपदस्य मनुष्यादिवद्भेदे "एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतो युगपत्सर्वयागेष्वङ्गं भवति" इति भाष्यविरोधापत्तेश्च। प्रादुर्भूतोऽभिव्यक्तः। ननु कस्तर्हि वृत्त्याश्रयशब्दः। स स्फोटात्मक इति गृहाण॥

ननु कोऽयं स्फोटः? उच्यते। चतुर्विधा हि वागस्ति-परा पश्यन्ती

---

उच्चारितश्च वर्णस्तदानीमेव नष्ट इति पौर्वापर्यसंहितयोरसम्भव इत्यर्थः॥

*संस्कारवशादिति*। पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितचरमवर्णानुभव एव तावद्वर्णगोचरां स्मृतिं जनयतीति तार्किकाशयो बोध्यः। *शब्दजशब्देति*। यथा वीचिरुत्पन्ना तरङ्गान्तरमुत्पादयतीति वीचितरङ्गन्यायेनैकैकशब्दाच्छब्दान्तरोत्पत्तिः, ततः श्रोत्रमागतो गृह्यते इति तार्किकाः। अव्यवहितोत्तरत्वसम्बन्धेनेत्यादिकां प्रथमामाशङ्कां निराकरोति-*अभिलापासम्भवेनेति*। *अविद्यमान इति*। अविद्यमानयोरपि जलघटयोराश्रयतानिरूपकत्वस्याश्रयत्वस्य च त्वद्रीत्या बाधाभावात्। तज्ज्ञानस्य प्रमात्वापत्तिः। किञ्चैवं पदवाक्ययोरभावेन शब्दार्थसम्बन्धस्यैव हानिः। तदुक्तं हरिणा—

'अशाब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेत्'।

इत्यादिनेत्यलम्॥

*स्फोटात्मक इति*। श्रोत्रेन्द्रियग्राह्यः स्फोटनामा पदार्थ इति भावः। *चतुर्वि-

मध्यमा वैखरी च । तत्र मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्म रूपा स्पन्दशून्या बिन्दुरूपिणी परा वागुच्यते । नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता मनोगोचरीभूता पश्यन्ती वागुच्यते । एतद् द्वयं वाग्ब्रह्मयोगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषय इत्युच्यते । ततो हृदयपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता तत्तदर्थवाचकस्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा जपादौ बुद्धिनिग्राह्या मध्यमा वागुच्यते तत आस्यपर्यन्तमागच्छता तेन वायुनोर्ध्वमाक्रामता च मूर्धानमाहत्य परावृत्य

---

चेति* । परा-पश्यन्ती-मध्यमा-वैखरीतिभेदात् । तथाहि—

'वैखरी शब्दनिष्पत्तिर्मध्यमाश्रुतिगोचरा ।
उद्यतार्था च पश्यन्ती सूक्ष्मा वागनपायिनी' ॥

इति ॥ अश्रुतिगोचरेतिपदच्छेदः । सा श्रुतिगोचरा न किन्त्वन्तः करणग्राह्या, वैखर्येव श्रुतिग्राह्येत्यर्थः *मूलाधारस्थेति* । षण्णवत्यङ्गुलो देहायामः । तत्र अष्टचत्वारिंशत्तममधस्तादुपरि च परित्यज्य मध्ये मूलाधारः । तदाहुः—

'पाय्वन्तादूद्व्यङ्गुलादूर्ध्वं लिङ्गाच्च द्व्यङ्गुलादधः ।
मध्यमेकाङ्गुलं यच्च देहमध्यं प्रचक्षते' ॥

इति ।

'नवाङ्गुलोर्ध्वतस्तस्मादस्थिकन्दोऽण्डसन्निभः ।
चतुरङ्गुलविस्तारस्तन्मध्यं नाभिरुच्यते' ॥

इति ॥ कुण्डलिनी मूलप्रकृत्यात्मिका महदादिभिर्वेष्टिता सर्पवत्तिष्ठति मूलाधारादुत्थितः पवनो नाडीद्वारेण कार्याणि करोतीति पातञ्जले स्पष्टम् । *योगिनामिति* । योगिनामित्युक्त्या न बुद्ध्या निश्चयात्मिकया हिरण्यगर्भदेवत्या तद्रूपप्रणवरूपत्वेन वोपास्यता दर्शिता । निराधारस्य चोपासनासम्भवादाधारोऽप्युक्तचेतनाधिष्ठानमन्तरेणाचेतनानां प्रकाशकत्वासम्भवादधिष्ठातृदेवताकीर्तनम् । *समाधाविति* ।

'सोऽहं ब्रह्म न संसारी न मत्तोऽन्यत्कदाचन ।
इति विद्यात्स्वमात्मानं स समाधिः प्रकीर्तितः' ॥

इति ॥

अपरञ्च-"समाधिस्तु समाधानं जीवात्मपरमात्मनोः । ब्रह्मण्येव स्थितिर्या सा समाधिः प्रत्यगात्मनः" इति ॥

*निर्विकल्पकेति* । तत्वं च-चिन्मात्रविषयत्वम् ।

*मध्यमा वागुच्यत इति* । स्वयं तु कर्णपिधाने सूक्ष्मतरवाय्वभिघातेन उपांशुशब्दप्रयोगे च श्रूयमाणा चेत्याहुः ।

च तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्राह्या वैखरी वागुच्यते। तदाह—

परा वाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा॥ इति।
वैखर्या हि कृतो नादः परश्रवणगोचरः।
मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते॥

इति च।

युगपदेव मध्यमावैखरीभ्यां नाद उत्पद्यते। तत्र मध्यमानादोऽर्थवाचकस्फोटात्मकशब्दव्यञ्जकः। वैखरीनादो ध्वनिः सकलजनश्रोत्रमात्रग्राह्यो भेर्यादिनादवन्निरर्थकः। मध्यमानादश्च सूक्ष्मतरः कर्णपिधाने जपादौ च सूक्ष्मतरवायुव्यङ्ग्यः शब्दब्रह्मरूपस्फोटव्यञ्जकश्च। तादृशमध्यमानादव्यङ्ग्यः शब्दः स्फोटात्मको ब्रह्मरूपो नित्यश्च।

तदाह हरिः—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ इति।

---

*वैखरी वागुच्यत इति*। प्रणव एव व्यानोदानाभ्यां वैखरीरूपं प्रतिपद्यते। अत एव हरिणा व्याकरणस्य त्रिविधा वाग्विषय इत्युक्तम्।

'वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदायास्त्रय्या वाचः परम्पदम्'॥

इति॥

*स्फोट इति*। शाब्दिकानां वाच्यलक्ष्यव्यङ्ग्यार्थप्रतिपादकानां वाचकलाक्षणिकव्यञ्जकानां शब्दानां तन्निष्ठजातेर्वा स्फोट इति व्यवहारः। स्फुटति अर्थो यस्मादिति व्युत्पत्त्या पङ्कजादिपदवद्योगरूढः स्फोटशब्दः। केवलयोगस्वीकारे वाच्यलक्ष्यव्यङ्ग्यानां चेष्टायाश्च व्यङ्ग्यार्थप्रतिपादकत्वेन तत्रातिव्याप्तेः। एवं चार्थनिष्ठविषयताप्रयोजकशक्तिमत्त्वमेव स्फोटत्वम्।

*अनादीति*। आदिनिधनरहितशब्दोपग्राह्यतया शब्दतत्वं स्थितिप्रवृत्तिप्रविभागादिशब्देन क्रियते। तच्चाक्षरनिमित्तत्वादक्षरं प्रत्यक् चैतन्ये निवेशितस्य परबोधार्थमभिव्यक्तेरर्थभावेन विवर्तते तत्वादप्रच्युतमेकं भेदानुकारेणाशक्त्यानेकरूपतां प्रतिपद्यते। न तत्रारम्भवादः परिणामवादो वा विवक्षितः, किन्तु विवर्तवादः। यथा, रज्जुः स्वयमविकृतैव सती मायया सर्पाकारेण विवर्तते। कारणस्वरूपाविरोधे च कार्यप्रतिभासः। अतो ब्रह्मणो निर्विकारत्वान्न नित्यत्वविरोध इति बोध्यम्॥

स च यद्यप्येकोऽखण्डश्च, तथाऽपि पदं वाक्यं जपाकुसुमादिलौहित्य-पीतत्वादिव्यञ्जकोपरागवशाद् लोहितः पीतः स्फटिक इति भानवद् वर्णादिव्यङ्ग्यः वर्णरूपः पदरूपो वाक्यरूपश्च । यथा च मुखे मणिकृपाणदर्पणव्यञ्जकोपाधिवशाद्दैर्घ्यवर्तुलत्वादिभानं तद्वत् । तदुक्तम्—

पदे न वर्णा विद्यन्ते वाक्येष्ववयवा न च ।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन ।। इति ।

किञ्च व्यञ्जकध्वनिगतं कत्वगत्वादिकं स्फोटे भासते । बिम्बगतध-

---

*वर्णादीति* । अत्रादिशब्देन पदवाक्ययोः सङ्ग्रहः । तेन वर्णरूपमध्यमानादव्यङ्ग्यो वर्णस्फोटः । पदरूपमध्यमानादव्यङ्ग्यः पदस्फोटः । वाक्यरूपमध्यमानादव्यङ्ग्यो वाक्यस्फोटः । *तद्वदिति* । यथा एकस्यैव मुखस्य कृपाणदर्पणाद्यभिव्यञ्जकवशाद्दैर्घ्यवर्तुलत्वादिप्रतीतिः, तथैवैकस्य तस्यैकत्वेऽपि तत्र व्यञ्जकरूपप्रतिबिम्बजन्यतद्रूपनिरूपितस्यैव प्रतीत्या नानात्वेन प्रतीतिरौपाधिकी बोध्या । अत एवभ्युपगमार्थं न तत्र जातिकल्पनापि । वर्णाभिन्नव्यञ्जकाऽभावाच्च न कदाचिदपि वर्णराहित्येन तत्प्रतीतिस्तत्प्रतिबिम्बसमर्पकाश्च संस्कारा एव । ते च येन क्रमेण चित्तस्थास्तेनैव व्यञ्जकरूपिता तस्येत्यभ्युपगमाच्च न सरो रस इत्यनयोरविशेषः । व्यञ्जकरूपरूपितस्यैव तस्यार्थे शक्तिग्रहाच्च, न घटादिपर्यायाभिव्यक्तस्फोटे गृहीतशक्तिकस्याप्रसिद्धपदश्रवणेऽर्थबोधापत्तिः । अत एवेदमेकं पदं, पदमिदमेकवाक्यमिति व्यवहारः स्वरसतः सङ्गच्छत इति दिक् ॥

*पदे* । पचतीत्यादौ । न वर्णाः । नातो वर्णसमूहः पदमिति शेषः । दृष्टान्तव्याजेनाह—*वर्णेष्विति* । एकारौकारऌकारऋकारादिवर्णेषु अवयवाः प्रतीयमानापि यथा नेत्यर्थः । सा प्रतीतिस्तु तत्तदुच्चारणविशेषव्यङ्ग्यतत्तद्वर्णसमानाकारकध्वनिविशेषोपरागौपाधिका भ्रान्तिरेव, अतो नार्थसाधिका । एकादावयवकल्पने गौरवापत्तेरिति भावः । एवं वाक्येऽप्याह—*वाक्यादिति* । पदानामपि वाक्याद्विवेको—भेदो नास्तीत्यर्थः ।

ननु मध्यमानादव्यङ्ग्यत्वेऽपि स्फोटात्मकशब्दस्य ब्रह्मवन्नित्यत्वैकत्वयोर्व्यवस्थानात्ककारोऽयं गकारोऽयमिति व्यवहारानुपपत्तिस्तस्य भेदनिबन्धनत्वादत आह-*किञ्चेति* । *स्फोटे भासत इति* । यथातिशुभ्रस्य निर्मलस्यापि स्फटिकस्य जपाकुसुमादिविजातीयरक्तादिवस्तुछायापातेन रक्तत्वाध्यवसायः, तथातिभेदरहितस्यापि नित्यस्यैकस्यापि स्फोटस्य विकारध्वनिगतत्वाद्यध्यवसायेनककारो गकार इत्यादिव्यवहारोपपत्तिरिति भावः ॥

र्मवैशिष्ट्येनैव प्रतिबिम्बस्य लोके अवधारणाद्। व्यञ्जकरूपितस्यैव स्फटिकादेर्भानाच्च। यथा चैकस्याकाशस्य घटाकाशो महाकाश इत्यौपाधिको भेदः, यथा चैकस्यैव चेतनस्यौपाधिको जीवेश्वरभेदो; जीवानां च परस्परं भेदः, एवं स्फोटेऽव्यञ्जकध्वनिगतकत्वादि भानात्ककारो बुद्ध इत्यौपाधिको भेदव्यवहारः। औपाधिको भेद इत्यत्रोपाधिः कत्वादिर्भिन्न

---

*व्यञ्जकरूपितस्यैवेति*। यथा-जपाकुसुमादिनानाव्यञ्जकरूपप्रतिबिम्बजन्यतद्रूपान्रूपितस्य नानात्वेन प्रतीतेरपि स्फटिकस्यैकत्वं, तथात्रापि व्यञ्जकध्वनिगतनानात्वेन प्रतीतावपि स्फोटस्यैकत्वमिति भावः। यथैकस्याकाशस्योपाधिवशान्नानात्वं घटाकाशो महाकाश इत्यादिस्तथैव प्रकृते उपाधिवशान्नानात्वमिति प्रदर्शयति-*यथेत्यादिना*। *एकस्यैव चेतनस्येति*। यथा लोके अमलः स्फटिकमणिः स्वसन्निहितानां नानाविधवर्णानां बन्धूकादीनां वर्णं धत्ते, रक्तः स्फटिक इत्यादि, तद्वद् विभुः आत्माऽपि गुणभावितस्य प्रकृत्या प्रकाशितस्य देहादिलक्षणस्य उपाधेर्भावं देवत्वमनुष्यत्वादिकं धत्ते इत्युपाधिवशात् जीवेश्वरभेद इति भावः।

*औपाधिक इति*। ध्वनिगतभेदस्य वर्णेष्वारोपादिति भावः। *औपाधिको भेदव्यवहार इति*। अत्रेदं तत्वम्—अवर्णादीनामेकत्वं नित्यत्वं विभुत्वं च तदवयवकपटादेरपि तत्वम्। कण्ठताल्वाद्यभिघातस्तद्व्यञ्जकः। देशभेदेऽपि पटादीनां देशघटितसन्निवेशाभेदवत्कालभेदेऽपि तद्घटितानुपूर्व्या अभेदः।

"प्रत्यक्षप्रत्यभिज्ञानाद्वर्णैकत्वं प्रतिष्ठितम्।
वर्णात्मकं पदं तच्च तदभेदान्न भिद्यते'।

इत्युक्तेः॥ दिनान्तरानुभूतेऽधुनानुभूयमानस्य सोऽयमितिप्रत्यभिज्ञया तावत्कालं स्थिरत्वसिद्धेस्तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यतीति न्यायात्पराभिमताशुविनाशित्वव्यतिरेके सिद्धे नित्यत्वपर्यवसानम्। नित्यत्वञ्चैषां सृष्ट्याद्यकालोत्पात्तकत्वं प्रलयकालनाश्यत्वं चेत्येतावदेव बोध्यम्। सर्वदेशेषु तदुपलम्भाद्विभुत्वम्; लाघवाच्चैकत्वम्। आनुपूर्वीघटकमव्यवहितोत्तरत्वं चैतत्पक्षे—उत्पत्त्यनवच्छिन्नस्वज्ञानाधिकरणकालोत्पत्तिकज्ञानविषयत्वम्। यथा—अत्यन्तरागवतः कामिनीसाक्षात्कारस्थले ज्ञानधाराकल्पने गौरवादेकत्वं तद्वत् ज्ञानानामपि एतद्विषये स्थिरत्वम्। व्यञ्जकगतवैजात्यमादायैव ककारहकारयोर्भेदव्यवहारः। अद्वैतसिद्धान्ते विषयसम्बन्धजन्यवृत्तिवैचित्र्येण व्यङ्ग्ये स्वरूपसुखे भेदव्यवहारवत्। विशेष्यांशमादायाभेदेऽपि तत्प्रतीतिर्नापाद्या। उपाध्यनालिङ्गिततत्प्रतीत्यभावात्। देशकालभेदप्रत्ययोऽप्यौपाधिक एव। स एव च पदादिरूपेणापि व्यङ्ग्य इति बोध्यम्। अत्रापि काल्पनिकः प्रकृतिप्रत्ययविभागः पदे, वाक्ये च पदविभागः। भेदेन कल्पिता अपि ते पदवदेव

उपाधेयस्तु आकाशस्फोटादिरेक एवेति तात्पर्यम्। पदवाक्ययोरखण्डत्वपक्षे त्वन्तिमवर्णव्यङ्ग्यः स्फोट एक एव । पूर्वपूर्ववर्णस्तु तात्पर्यग्राहकः । न्यायनये चित्रगुरित्यादौ चित्रादिपदवत् ॥

ध्वनिस्तु द्विविधः । प्राकृतो वैकृतश्च । प्रकृत्याऽर्थबोधनेच्छया स्वभावेन वा जातः स्फोटव्यञ्जकः प्रथमः प्राकृतः । तस्मात्प्राकृताज्जातो विकृतिविशिष्टश्चिरस्थायी निवर्तको वैकृतिकः ।

हरिरप्याह—

स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।
शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः ॥
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥ इति ।

---

नित्याः । तदुक्तम् "आद्यन्तौ" इति सूत्रे भाष्ये "नित्येषु शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यम्" इति दिक् ।

*आकाशस्फोटादिरिति* । आकाशश्च स्फोटश्च आकाशस्फोटौ, तौ आदिर्यस्येति विग्रहः । अथवा आसमन्तात्काशते—प्रकाशते इत्याकाशः स्वयम्प्रकाशरूपः ब्रह्मेत्यर्थः । स चासौ स्फोटश्चेति बोध्यः । स्फोटरूपस्य शब्दस्य ब्रह्मरूपत्वं स्मृतिपुराणप्रसिद्धम्—"शब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" इत्यादि ।

ननु अन्तिमवर्णस्यैव तात्पर्यग्राहकत्वे पूर्वपूर्ववर्णोच्चारणानर्थक्यमित्याशङ्क्याह—*पूर्वपूर्वेति* । *न्यायनये इति* । तेषां मते चित्रग्वादिबहुव्रीहौ गवादिपदमेव चित्राद्यभिन्नगवादिस्वाम्यर्थे लाक्षणिकम् । चित्रादिपदन्तु लक्षणायां तात्पर्यग्राहकं यथा कल्प्यते, तथा प्रकृतेऽपि चरमवर्णजन्यबोधे पूर्वपूर्ववर्णास्तात्पर्यग्राहका इति बोध्यम् । *ध्वनिस्त्विति* ।

'ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते ।
अल्पो महांश्च केषांचिदुभयं तत्स्वभावतः' ।

इति । स्फोटः शब्द इति श्रोत्रेन्द्रियग्राह्यस्फोटनामा पदार्थः शब्दः, ध्वनिस्तदभिव्यक्त्युत्तरं जायमानो वैकृतध्वनिरूपः, शब्दस्य चिराचिरोपलब्धिकारत्वाद् गुण उपकारकः । *प्राकृत इति* । प्राकृतशब्देन स्फोटव्यञ्जकमत्रोच्यते । तथाहि—

'स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते' ।

ग्रहणे-अभिव्यक्तावित्यर्थः । *वैकृतिक इति* ।

'स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ।

स्थितिभेदे चिराचिरोलब्धिविशेषे इत्यर्थः ।

शब्दस्याभिव्यक्तेरूर्ध्वं, वैकृता ध्वनयो जायन्ते इति शेषः। वृत्तिभेदे इति।

अभ्यासार्थे द्रुता वृत्तिर्मध्या वै चिन्तने स्मृता।
शिष्याणामुपदेशार्थं वृत्तिरिष्टा विलम्बिता॥ इति।

तिसृषु वृत्तिषु समुपोहन्ते कारणानि भवन्ति स्फोटस्तु तैर्न भिद्यत इति तदर्थः।

अत्रेदं बोध्यम्—केनचिद् घटमानयेति वैखरीनादः प्रयुक्तः, स केन चिच्छ्रोत्रेन्द्रियेण गृहीतः, स नाद इन्द्रियद्वारा बुद्धिहृद्गतस्सन्नर्थबोधकं

---

'शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः।
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते'। इति।

*द्रुतेति*। द्रुतायां वृत्तौ तदुच्चारयति वक्तरि ब्रह्माण्डसम्बद्धासामृतबिन्दुस्राविणीति योगिप्रसिद्धेर्यस्याः सुषुम्णारब्धनाडिकाया अनन्नपानीयबिन्दवः स्रवन्ति, तस्या एव मध्यमायां वृत्तौ द्वादशबिन्दवः स्रवन्ति, विलम्बितायां वृत्तौ षोडषबिन्दवः स्रवन्तीति पूर्वपूर्वतस्त्रयो भागा अग्रेऽधिका इत्यर्थः। *वैखरीनाद इति*। अत्र नन्दिकेश्वरकाशिकायामपीदमुक्तम्—

'ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः परम्।
वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः'।

इति विशुद्धचक्राख्ये वक्त्रे अभिव्यक्तो यो वैखरीनादः। *प्रयुक्त इति*। घटकर्मकेच्छया वक्त्रा वैखरीनादाख्यो ध्वन्यपरपर्यायो मध्यमानादस्फुरणायोच्चारित इत्यर्थः। एतन्नादस्यैव परश्रवणेन्द्रियग्राह्यताया उक्तत्वात् "उच्चारितः शब्दप्रत्यायको नानुच्चारितः" इति न्यायादिति भावः।

*गृहीत इति*। श्रावणप्रत्यक्षविषयीकृत इत्यर्थः। *इन्द्रियद्वारेति*। श्रोत्रादीन्द्रियद्वारेत्यर्थः। *बुद्धिहृद्गत इति*। बुद्धिर्नाम निश्चयात्मिका अन्तःकरणवृत्तिः। हृत्-नाम चित्तं, 'चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरकोशात्। अनुसन्धानात्मिका अन्तःकरणवृत्तिर्हि चित्तम्-पूर्वाननुभूतो हि विषयो बुद्धिविषयो भवति। हृदः पुनः पूर्वानुभूत इति द्वयोर्मध्ये भेदः। तौ गतः बुद्धिचित्तगत इत्यर्थः। *अर्थबोधकमिति*।

'बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ताधीरस्तन्वन्नीतिः'।
शब्देनार्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यं'।

य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति अस्मिन्नर्थेऽयं शब्दः प्रयो-

शब्दं स्वनिष्ठकत्वादिना व्यञ्जयति ।तस्मादर्थबोधः। स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या स्फोटः। उच्चारयितुस्तु युगपदेव मध्यमावैखरिभ्यां नाद उत्पद्यते। तत्र वैखरीनादो वन्हेः फूत्कारादिवन्मध्यमानादोत्साहकः, मध्यमानादस्फोटं व्यञ्जयतीति शीघ्रमेव ततोऽर्थबोधः। परस्य विलम्बेनानुभवसिद्धत्वात्। अत एव श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्द इत्याकरग्रन्थस्सङ्गच्छते। कत्वादिना श्रोत्रोपलब्धित्वं स्फोटात्मकपदादिरूपेण तु बुद्धिनिर्ग्राह्यत्वम्, स च प्रयोगेण वैखरीरूपेणाभिज्वलितः स्वरूपरूषितः कृत इति तदर्थः। तत्रापि शक्यत्वस्येव शक्तताबच्छेदिकाया वर्णपदवाक्यनिष्ठजातेर्वाचकत्वम्। तदुक्तम्—

अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता। इति।

तस्मादष्टविधस्फोटात्मकश्शब्दो वृत्त्याश्रयः। वस्तुतस्तु वाक्यस्फोटो

---

क्तव्यः, अस्मिंश्च शब्दे अयं इति "परःसन्निकर्ष" सूत्रे भाष्ये स्पष्टम्। *स्फुटत्यर्थोऽस्मादिति*। स्फुटत्यभिव्यक्तीभवत्यर्थोऽस्मादिति व्युत्पत्या अर्थप्रकाशत्वम्, प्रकाशश्च ज्ञानम्। तथाचार्थनिष्ठविषयताप्रयोजकशक्तिमत्त्वं पर्य्यवस्यति। *फूत्कारादिवदिति*। अप्रज्वलितस्य वह्नेः फूत्कारादयो यथा उद्बोधकास्तथा वैखरीनाद इति भावः। *श्रोत्रोपलब्धिरिति*। श्रोत्रे एव उपलब्धिर्यस्येत्यर्थः। श्रोत्रोपलब्ध्या च शब्दस्याकाशदेशत्वं प्रतिपादितम्। *आकाशदेश इति*। कर्णशष्कुल्यवच्छिन्नभस एव श्रोत्रत्वादाकाशदिशोर्नातिरिक्तत्वमित्यभिप्रायेण देशशब्दप्रयोग आकाशे बोध्यः। यद्वा आकाशो देशः अभिव्यक्तिस्थानं यस्येति बहुव्रीहिः। आकाशे एव शब्दाभिव्यक्तिस्वीकारात्। *बुद्धिनिर्ग्राह्य इति*। पूर्वपूर्वध्वन्युत्पादिताभिव्यक्तिजनितसंस्कारपरम्परासहकृतान्त्यवर्णबुद्धिग्राह्योऽर्थ इत्यर्थः। *प्रयोगेणेति*। प्रयोगो नामध्वनिः, तेनाभिव्यक्त इत्यर्थः। *स्वरूपरूषितःकृत इति*। एतेन कदम्बमुकुलादिन्यायेनानन्तशब्दजशब्दानां तत्प्रागभावध्वंसानां तत्प्रत्यक्षानुपपत्त्या नैयायिककल्पनमपास्तम्। *तत्रापीति*। अर्थगतजातेर्यथा शक्यत्वं तथा शक्यतावच्छेदकवर्णादिगतजातेरेव वाचकत्वमिति भावः। *अनेकव्यक्त्यभीति*। अनेकाभिर्वर्णव्यक्तिभिरभिव्यक्तैव जातिस्फोट इति स्मृता। योगार्थतया बोधिकेति भावः।

*अष्टविधेति*। वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, अखण्डपदवाक्यस्फोटौ वर्णवाक्यभेदेन त्रयो जातिस्फोटाः इति। *वृत्त्याश्रय इति*। शक्त्याश्रयेति भावः। वर्णपदभेदस्फोटानान्दूषितप्रायत्वात्स्वमते निष्कर्षमाह—*वस्तुतस्त्वित्यादिना*। *वाक्यस्फोट इति*। लोके तस्यैवार्थबोधकत्वात्। शक्तिग्राहकशिरोमणिना वृद्ध-

वाक्यजातिस्फोट एव वा वृत्त्याश्रयः। तत एव लोकेऽर्थबोध इत्याद्युक्तत्वा- दिति सर्वं सुस्थम्।

इति स्फोटनिरूपणम्॥

अथ शाब्दबोधसहकारिकारणानि आकाङ्क्षा-योग्यता-आसत्ति-तात्पर्या- णि। वाक्यसमयग्राहिकाऽऽकाङ्क्षा। सा चैकपदार्थज्ञाने तदर्थान्वययोग्यार्थस्य यज्ज्ञानं तद्विषयेच्छा 'अस्यान्वय्यर्थः कः' इत्येवं रूपा पुरुषनिष्ठैव, तथापि

---

व्यवहारेण प्रथमं तत्रैव शक्तिग्रहादिति तात्पर्यम्। अत एव हरिरप्याह—

'वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः'। इति।

न्यायभाष्यकारैरप्युक्तम्—"पदसमूहो वाक्यमर्थसमाप्तौ" इति।

इत्यर्थदीपिकायां स्फोटविचारः।

स्वमतेऽर्थबोधजनकत्वरूपैव शक्तिस्तत्र च बोधपदेन शाब्दबोधग्रहणाच्छाब्दबोधे वृत्तिज्ञानाधीनोपस्थितपदपदार्थधियः कारणत्वेन तद्घटकवृत्त्यादीन् निरूप्येदानीं सह- कारिकारणनिरूपणमारभते—*अथ शाब्देत्यादिना*।

*सहकारीति*। मुख्यकारणजन्यकार्यजनकत्वे सति मुख्यकारणभिन्नत्वमिति। यथा—घटकार्यं प्रति मुख्यकारणत्वं कपालस्य। इतरेषां तु सहकारिकारणत्वम्। यथा वा यागादेः स्वर्गं प्रति मुख्यकारणत्वम्, अपूर्वस्य तु सहकारिकारणत्वम्। प्रकृते तु पदज्ञानं शाब्दबोधे मुख्यं कारणम्, पदार्थोपस्थित्यादीनां तु सहकारिकार- णत्वम्। तदुक्तं कारिकावल्याम्—

'पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी'॥ इति।

एकपदस्य पदान्तरसमभिव्याहार आकाङ्क्षेति केचित्। केचित्तु एकपदस्य प- दान्तरप्रयोज्यान्वयाननुभावकत्वमाकाङ्क्षामाहुस्तान्निराचष्टे-*वाक्यसमयेत्यादिना* अत्र समयपदं शक्तिपरम्। तथाच वाक्यशक्तिग्राहकेत्यर्थः। यथाह न्यायभाष्यकार "समयज्ञानार्थं चेदं पदलक्षणया वाचोऽन्वाख्यानं व्याकरणं, वाक्यलक्षणया वाचोऽर्थ- लक्षणम्" इति। * सा चैकेति*। यथा घटादिपदार्थज्ञानानन्तरं तदन्वयिन आनयना- देर्जिज्ञासा भवतीति।

यद्यपि 'घटमानय' इति वाक्ये द्वयोरपि पदार्थयोरवगतत्वान्नास्ति जिज्ञासा, त- थापि एकपदार्थज्ञानमात्रे इत्यर्थः *तद्विषयेच्छेति*। ज्ञानविषयिणीच्छेत्यर्थः। *पुरु- षनिष्ठैवेति * इच्छारूपायास्तस्यास्तत्रैवौचित्यात्।

ननु भवन्मतेऽपि इच्छायाः आत्मगुणत्वेन शब्दे अर्थे वा स्थित्यसम्भव इत्यत आह-*त-

तस्याः स्वविषयेऽर्थे आरोपः । अयमर्थोऽर्थान्तरमाकाङ्क्षतीति व्यवहारात् । इदमेवाभिधानापर्यवसानमित्युच्यते(१) । पदे तु नारोपः, अर्थबोधोत्तरमेवाकाङ्क्षोदयात् । पदं साकाङ्क्षमिति तु साकाङ्क्षार्थबोधकमित्यर्थकम् । तदुक्तं समर्थसूत्रे भाष्ये-"परस्परव्यपेक्षां सामर्थ्यमेके । का पुनश्शब्दयोर्व्यपेक्षा । न ब्रूमश्शब्दयोरिति, किं तर्हि अर्थयोरिति" । ईदृशजिज्ञासोत्थापकं चैकपदार्थेऽपरपदार्थव्यतिरेकप्रयुक्तस्यान्वयबोधाजनकत्वस्य(२)ज्ञान-

---

थापीति* । *स्वविषये इति* । आकाङ्क्षाविषये इत्यर्थः । *अर्थे आरोप इति* । विषयतासम्बन्धेनाकाङ्क्षायाः अर्थेऽपि सत्वादिति भावः । *आरोप इति* । इच्छायाः सम्बन्धस्य चारोप इति तात्पर्यम् ।

*इदमेवेति* । अभिधानस्य वाचकत्वस्यापर्यवसानमपूर्णत्वमित्यर्थः । *अर्थबोधोत्तरमिति* । पदनिष्ठार्थनिरूपितवृत्तिज्ञानोत्तरार्थोपस्थित्युत्तरमिति भावः ।

अत्रेदं बोध्यम्—पदस्य वा वाचकत्वपक्षे तत्तदर्थबोधस्य निरूपिततत्पदनिष्ठवृत्तिज्ञानवशात्सम्भवेऽपि संसर्गं वृत्त्यभावेन तद्भानं शाब्दबोधे दुरुपपादं, तत्पदजन्यतदर्थबोधम्प्रति तत्पदनिष्ठतदर्थनिरूपितवृत्तिज्ञानस्य कारणत्वादिति सोऽपि भासताम् । अत एव आकाङ्क्षाज्ञानस्याप्यन्वयबोधम्प्रति कारणत्वं वक्तव्यम् । वाक्यशक्तिवादिनां तु नायं दोषः । तन्मते संसर्गविशिष्टे शक्तिसत्वात् । अत एवान्विताभिधानवादिमीमांसकैकदेशिन इतरार्थान्वितार्थे शब्दस्य शक्तिं स्वीकृत्य इतरान्वितो घटः घटपदशक्य, इत्येवं सर्वत्र शक्तिग्रहं वदन्ति । तत्रान्वयत्वसामान्यरूपेणान्वयमात्रोपस्थितौ योग्यतावशात् तात्पर्यनिश्चयवशाच्चान्वयविशेषभानं मन्यत इति दिक् ।

ननु आकाङ्क्षायाः पदे आरोपाभावे पदं साकाङ्क्षमिति व्यवहारः कथमुपपद्यत इत्यत आह—*पदमिति* ।

*अर्थयोरिति*। देवदत्तो गामपेक्षते मदीयेयमिति गौश्च देवदत्तमपेक्षते अहमस्येति स्वं स्वमर्थं प्रति शब्दस्य विशेषणत्वेन गुणीभावादर्थयोरेवाकाङ्क्षा न शब्दयोरिति भावः । *एकपदार्थ इति* । घटपदार्थे अपरपदार्थव्यतिरेकप्रयुक्तस्य अपरपदार्थज्ञाना-

---

( १ ) अभिधानस्यापर्यवसानम् अपूर्णतेत्यर्थः ।

( २ ) एतादृशज्ञानस्य बोधहेतुत्वात् एकवारमन्वयबोधे जाते तदजनकत्वज्ञानाभावान्न पुनरन्वयबोधः । अन्वयबोधश्च-तदाकाङ्क्षितसकलक्रियाकारकादिविषयो विवक्षितः । तेन खण्डवाक्यार्थबोधोत्तरं न महावाक्यार्थबोधानुपपत्तिः । एतन्मूलिकैव च 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इति व्युत्पत्तिरित्यादि लघुमञ्जूषायां स्पष्टमिति तत एवावगन्तव्यम् ।

मिति तद्विषये तादृशान्वयबोधजनकत्वेऽप्याकाङ्क्षेति व्यवहारः।

यद्वा उत्थापकताविषयतान्यतरसम्बन्धेनोभयसम्बन्धेन वाऽर्थान्तरजिज्ञासा आकाङ्क्षा। आद्यम्–'पश्यमृगो धावति' इत्यत्र, दर्शनार्थस्य कारकधावनाकाङ्क्षोत्थापकत्वं धावनं तु तद्विषय एव। अन्त्यन्तु–'पचति तण्डुलं देवदत्तः' इत्यादौ, क्रियाकारकयोर्द्वयोरपि परस्परं तदुत्थापकत्वात्तद्विषयत्वाच्च।

अत एव घटः कर्मत्वम् आनयनं कृतिरित्यतो घटमानयेतिवन्नान्वयबोधः; आकाङ्क्षाविरहात्। घटमानयेति विभक्त्यन्ताख्यातान्तयोरेव साकाङ्क्षत्वाच्च। इत्याकाङ्क्षानिरूपणम्।

---

भावप्रयोज्यस्येत्यर्थः। तथा च–घटपदार्थे आनयपदार्थाभावप्रयोज्यबोधाजनकत्वस्य ज्ञानमित्यर्थः। अत एव पदस्य पदान्तरप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षेति तार्किकाः प्राहुः। यथा घटमिति सुबन्तमानयेति च तिङन्तमपेक्ष्यैव घटकर्म्मकानयनार्थबोधञ्जनयति। तथैवानयेति तिङन्तं पदं घटमिति सुबन्तं पदम्, तयोश्च परस्परमन्यतरद्विनाऽर्थबोधोत्पादकत्वादिति भावः। *तद्विषये इति*। बोधाजनकत्वज्ञानविषय इत्यर्थः। वेदान्तपरिभाषाकारास्तु—पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षा। क्रियाश्रवणे कारकस्य; कारकश्रवणे क्रियायाश्च, जिज्ञासाविषयत्वम्। क्वचिज्जिज्ञासामन्तरापि शाब्दबोधदर्शनात् तत्सङ्ग्रहाय योग्यत्वपदोपादनमिति वदन्ति।

नन्वेवं घटः कर्मत्वम् आनयनं कृतिरित्यादौ कर्मत्वपदोपस्थाप्यकर्मत्वज्ञाने तदर्थान्वययोग्यानयनार्थस्य यज्ज्ञानं तद्विषयेच्छारूपाकाङ्क्षायाः सत्वात् घटमानयेति वाक्यजन्यशाब्दबोधवत् तत्रापि शाब्दबोधापत्तिरत आह—*उत्थापकेति*। एवञ्च द्वितीयान्तपदोपस्थाप्यस्यैव आनयपदोपस्थापितानयने आकाङ्क्षा। एवमानयपदोपस्थापितस्यैव द्वितीयान्तपदोपस्थापितार्थे आकाङ्क्षेति न कश्चिद्दोषलेश इति भावः। *आद्यमिति*। अन्यतरसम्बन्धेन। *कारकधावनेति*। क्रियायाः कारकापेक्षासत्वेन सकर्म्मकदर्शनादिक्रियायाः कर्मांशे प्रकृते सापेक्षत्वेन तत्र दर्शने धावनक्रियान्वयौचित्यादिति भावः। *धावनं तु तद्विषय एवेति*। ईदृशस्थले क्रियाकारकसम्बन्धो वाक्यशक्य एव। अत एव "विभाषा साकाङ्क्षे" इति सूत्रे भाष्ये "अस्त्यस्मिन्नाकाङ्क्षेति च साकाङ्क्षम्" इत्युक्तम्। अस्मिन्निति विषयसप्तमीत्यलम्। *अत एवेति*। उक्ताकाङ्क्षायाः शाब्दबोधम्प्रति हेतुत्वादेवेत्यर्थः। *विभक्त्यन्तेति*। सुबन्ततिङन्तयोरित्यर्थः। *साकाङ्क्षत्वाच्चेति*। घटनिष्ठकर्म्मतानिरूपकानयनबोधे घटमित्येतत्सुबन्तानयेतितिङन्तपदयोरेव साकाङ्क्षत्वादिति भावः।

इत्यर्थदीपिकायामाकाङ्क्षानिरूपणम्।

योग्यता च-परस्परान्वयप्रयोजकधर्मवत्त्वम् । तेन 'पयसा सिञ्चति' इति वाक्यं योग्यम् । अस्ति च सेकान्वयप्रयोजकद्रवद्रव्यत्वं योग्यता जले, करणत्वेन जलान्वयप्रयोजकार्द्रीकरणत्वं योग्यता सेकक्रियायाम् ।

अत एव 'वह्निना सिञ्चति, इति वाक्यमयोग्यम् । वह्नेः सेकान्वयप्रयोजकद्रवद्रव्यत्वाभावात् ।

एतादृशस्थलेषु नान्वयबोधः,किन्तु प्रत्येकं पदार्थबोधमात्रमिति नैयायिकाः । तन्न । बौद्धार्थस्यैव सर्वत्र बोधविषयत्वेन बाधस्याभावात् ॥

---

क्रमप्राप्तां योग्यतां निर्वक्तुमुपक्रमते—*योग्यतेत्यादिना* ।

नैयायिकास्तावत्—बाधाभावो योग्यतास्तु, सा च तात्पर्यविषयीभूतपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वाभावः । यथा हि-तात्पर्य्यविषयीभूतजलकरणकत्वसम्बन्धे सेकनिष्ठात्यन्ताभावप्रतियोगित्वाभावः, इति चेन्न । विशिष्टबुद्धौ बाधाभावस्यैकरूपेण कारणत्वासम्भवात् । पृथक्रूपेण कारणत्वकल्पने तु गौरवाच्च । तदपेक्षया शाब्दबोधे योग्यताज्ञानस्यैव कारणत्वौचित्यात् ।

परे तु अन्वयप्रयोजकसमभिव्याहृतकार्यशक्तिमत्वं योग्यता, सा च शाब्दबोधे भासते । अत एव 'घटेन जलमाहर' इत्यादौ सच्छिद्रेतरस्यैव जलाहरणशक्तिमत्वेन सच्छिद्रेतरत्वप्रकारको बोधः । अत एव प्रतिनिधेः श्रौतत्वोपपत्तिरिति दिक् ।

*परस्परेति* । अयमेव शाब्दबोधः । अत्राहि—तद्वाक्यजन्यतदर्थनिष्ठविषयतानिरूपकशाब्दबोधं प्रति तद्वाक्यघटकपदार्थनिष्ठविशेष्यतानिरूपकपरस्परान्वयबोधप्रयोजकधर्मप्रकारकज्ञानं कारणमिति कार्यकारणभावोऽवसेयः । ज्ञानञ्चात्र पदार्थस्मृत्यनन्तरमेवापेक्ष्यते, तदैव बाधज्ञानोदयसम्भवात् । न ह्येकपदस्यापरपदासमभिव्याहारे तत्सम्भवति । एवं हि अस्मिन्पक्षे शाब्दबोधम्प्रति योग्यताहेतुरिति फलतीति बोध्यम् ।

*पयसा सिञ्चतीति*।पयसा सिञ्चतीत्यादौ सेकान्वयप्रयोजकधर्मजलत्वस्य पयसि, एवं पयःकरणकान्वयप्रयोजकधर्मसेकत्वस्य सेकक्रियायामिति समन्वयो बोध्यः । शाब्दबोधस्तु जलनिष्ठकरणतानिरूपकार्द्रीकरणानुकूल—एकाश्रयको वर्तमानकालिको व्यापार इति वैयाकरणमते बोध्यः ।

अलक्ष्ये लक्षणगमनासम्भवो दर्शयति—*अत एवेत्यादिना* । अत एव—निरुक्तयोग्यताया अन्वयबोधप्रयोजकत्वादेव । *वह्निनेति* । अत्र तृतीयार्थकरणताया निरूपकत्वेनार्द्रीकरणरूपे सेके एवान्वयोऽभ्युपेयः, स च न सम्भवति । वह्नौ आर्द्रीकरणकरणताया बाधितत्वादिति भावः ।

*बौद्धार्थस्यैवेति* । बुद्धिविषयार्थस्यैव शब्दशक्यत्वेन तस्य शाब्दबोधविषयत्वं

हरिरप्याह—

"अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति च" । इति

अतो वन्ध्यासुतादिशब्दानां प्रातिपदिकत्वम् ॥

वह्निना सिञ्चतीत्यतो बोधाभावे तद्वाक्यप्रयोक्तारं प्रति 'अद्रवेण वह्निना कथं सेकं ब्रवीषि' इत्युपहासानापत्तेश्च । वाक्यार्थबोधे जाते बुद्धार्थविषये प्रवृत्तिस्तु न भवति, बुद्धार्थेऽप्रामाण्यग्रहादित्यन्यत्र विस्तरः ॥

इति योग्यतानिरूपणम् ।

प्रकृतान्वयबोधाननुकूलपदाव्यवधानम्—आसत्तिः । गिरिरग्निमानित्यासन्नम् । अनासन्नं च—'गिरिर्भुक्तमग्निमान्देवदत्तेन' इति । आसत्तिरपि

---

निष्प्रत्यूहमिति भावः ।

अत्रेदमवधेयम्—वस्तुतो बाधज्ञानं न कस्यापि ज्ञानस्य प्रतिबन्धकम् । बाधकालेऽपि सामग्र्यां विद्यमानायां सत्यां ज्ञानं समुत्पद्यत एव, तत्र स्वस्वसामग्र्या जायमानयोर्ज्ञानयोर्यस्य ज्ञानस्य दोषविशिष्टसामग्रीजन्यत्वं न तस्य प्रामाण्यम् । यस्य तु पुनर्निर्दुष्टसामग्रीजन्यत्वं तस्य प्रामाण्यमित्येव मर्यादेति लघुमञ्जूषायां स्पष्टम् ॥

*अत्यन्तेति* । उत्तरार्धस्तु—

"अबाधात्तु प्रमामत्र स्वतः प्रामाण्यनिश्चलाम्" । इत्यवसेयः ।

"एष वन्ध्यासुतो याति खपुष्पकृतशेखरः ।

कूर्मक्षीरचये स्नातः शशशृङ्गधनुर्धरः ॥

अङ्गुल्यग्रे करिशतं क्रीडति । मम कर्णविवरं प्रविश्य सिंहो गर्जति । इत्यादिशब्दादुत्पद्यमानस्य शाब्दज्ञानस्यानुभवसिद्धतया न तद्बाधसम्भवः, किन्तु तज्ज्ञानाविषयीभूतबाह्यार्थस्य बाधादप्रामाण्यं, विषयस्याबाधात्सर्वत्र प्रामाण्यमिति तात्पर्यम् ।

इत्यर्थदीपिकायां योग्यतानिरूपणम् ।

क्रमप्राप्तामासत्तिं निरूपयति—*प्रकृतान्वयेति* । प्रकृतो योऽन्वयबोधस्तदननुकूलपदेन तदजनकपदेनाव्यवधानमित्यर्थः । प्रकृतान्वयबोधानुकूलपदव्यवधाने तु शाब्दबोधो भवत्येवेति फलितम् । *आसत्तिरिति* । अन्वयप्रतियोगिपदार्थानां तद्बोधकपदानाञ्चाव्यवधानेनोपस्थितिरासत्तिरित्यर्थः । अत एव गामित्युच्चार्य प्रहरानन्तरमानयेत्युच्चारणे आसत्त्यभावान्न गवानयनप्रतीतिः । ध्वनितञ्चेदं संहितासंज्ञा सूत्रे भाष्ये । तदेतत्सर्वं मनसि निधाय वदति—*गिरिर्भुक्तमिति* ।*आसत्तिरपीति* । मन्दस्याविलम्बेन बोधे आसत्तिरपि कारणम् । अमन्दस्य तु आसत्त्यभावेऽपि बोधो भवतीत्यर्थः । एवं चानासन्नस्थले योजनावाक्याद्विलम्बेन बोध इत्येतावतैवानासन्न-

मन्दबुद्धेरविलम्बेन शाब्दबोधे कारणम् । अमन्दबुद्धेस्तस्यामत्यभावेऽपि पदार्थोपस्थितावाकाङ्क्षादितोऽविलम्बेनैव बोधो भवतीति न बोधे तस्याः कारणत्वम् । ध्वनितं चेदं(१)"नपदान्त"सूत्र भाष्ये ।

स्थाल्यामोदनं पचतीत्यादौ स्थाल्यामित्यस्यौदनपदेन व्यवधाने सत्यपि प्रकृतान्वयबोधानुकूलत्वादासन्नत्वात्तिः ॥ इत्यासत्तिनिरूपणम् ।

एतद्वाक्यं पदं वा एतदर्थबोधायोच्चारणीयमितीश्वरेच्छा—तात्पर्यम् ।

---

त्वव्यवहार इति भावः । *ध्वनितञ्चेति* । आसक्तिज्ञानस्य कारणत्वमित्यर्थः । *भाष्ये इति* । तत्र हि स्वरदीर्घयलोपानां स्थानिवद्भावनिषेधप्रसङ्गे स्वरे कर्तव्ये आकर्षिकः । चिकीर्षकः । दीर्घ प्रतिदीव्नः इत्यादौ लोपाजादेशस्य स्थानिवद्भावः प्रातिषेधनिकः इति निषेधं विधाय तत्र हि—"वक्तव्यम्, न वक्तव्यम् । इह हि लोपोऽपि प्रकृतः आदेशोऽपि । विधिग्रहणमपि प्रकृतमनुवर्तते । दीर्घादयोऽपि निर्दिश्यन्ते । केवलं तत्राभिसम्बन्धमात्रं वक्तव्यम्, स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिवत्" इति । अत्राक्षेपः कृतः—आनुपूर्व्येण सन्निविष्टानां यथेष्टसम्बन्धः शक्यते कर्तुम् । नचैतान्यानुपूर्व्येण सन्निविष्टानि । तस्योपरिसमाधीयत—आनुपूर्व्येणापि सन्निविष्टानां यथेष्टमभिसम्बन्धो भवति । तद्यथा—अनड्वाहमुदाहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीरिति । तस्य यथेष्टमभिसम्बन्धो भवति उदाहारि भगिनि या त्वं कुम्भं हरसि शिरसा अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति" उक्तम् । अनेन भाष्येण आसक्ति विनापि शाब्दबोध इति स्पष्टं सूचितम् । *स्थाल्यामोदनमिति* । अन्वयबोधानुकूलेतिविशेषणस्य प्रयोजनं प्रदर्शितमिति बोध्यम् । इत्यर्थदीपिकायामासक्तिनिरूपणम् ॥

क्रमप्राप्तं तात्पर्यं प्रदर्शयति—*एतद्वाक्यमिति* । *ईश्वरेच्छेति* । ईश्वरपदमत्र वक्तुरुपलक्षणम्बोध्यम् । अन्यथा नदीवृद्ध्यादिपदेष्वीश्वरेच्छाया अभावाच्छाब्दबोधानुपपत्तेः । नदीपदमीकारोकारान्तबोधनेच्छयोच्चरितम्, एवं वृद्धिपदमादैच्बोधनेच्छयोच्चरितमिति शास्त्रकारमात्रेच्छायाः सत्वात् । इदन्त्वार्थिकार्थकथनं न तु तत्स्वरूपपरम् । तच्च एतद्वाक्यं पदं वा इममर्थम्बोधयतु इति पदविशेष्यकम् । अस्माद्वाक्या-

---

(१) तत्र हि-"स्वरदीर्घयलोपेषु इत्यादिवार्तिकन्यासंग्रहसिद्धार्थकत्वप्रतिपादनार्थमिदमुक्तम् । "आनुपूर्व्येणसन्निविष्टानां यथेष्टमभिसम्बन्धः शक्यते कर्तुं, न चैतान्यानुपूर्व्येण सन्निविष्टानि । अनानुपूर्व्येण सन्निविष्टानामपि यथेष्टमभिसम्बन्धो भवति । तद्यथा-अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीरित्यस्य यथेष्टमभिसम्बन्धो भवति, उदहारि भगिनि या त्वं कुम्भं हरसि शिरसा अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति" ।

अत एव सति तात्पर्ये 'सर्वे सर्वार्थवाचकाः' इति शाब्दिकनये घटशब्दात्पट-प्रत्ययो नेत्याद्युक्तम् । नानार्थस्थले लोके तात्पर्यन्तु एतत्पदं वाक्यं वा एतदर्थप्रत्ययाय मयोच्चार्यते इति प्रयोक्तुरिच्छारूपम् । तात्पर्यनियामकं च लोके प्रकरणादिकमेव । अतो भोजनप्रकरणे सैन्धवमानयेत्युक्ते सैन्धवपदेन लवणप्रत्ययः, युद्धावसरेऽश्वप्रत्ययः । वेदवाक्ये चेश्वरतात्पर्यादर्थबोधः ।

इति तात्पर्यनिरूपणम् ।

---

त्पदाद्वाऽयमर्थो बोद्धव्य इत्यर्थविशेष्यम् । एतदपि न स्वरूपत्वे हेतुः वक्त्रा उच्चारिते वाक्ये पदे वा श्रोतुस्तात्पर्यज्ञानाभावे तादृशार्थानुपस्थितेः सर्वजनानुभवसिद्धत्वात्, किन्तु तज्ज्ञानमेव हेतुः । तज्ज्ञानञ्च प्रकरणाद्भवतीति उक्तप्रायम् । श्रोतृबोधायैव शाब्दप्रयोगात् । एवञ्च तत्पदजन्यतदर्थविषयकशाब्दबोधं प्रति तदर्थविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपिततत्पदनिष्ठविशेष्यताकं, तथा तत्पदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपिततदर्थनिष्ठविशेष्यताकं वा वक्तृतात्पर्यज्ञानं कारणमिति कार्यकारणभावो ज्ञेयः ।

*अत एव*—शाब्दबोधम्प्रति वक्तृतात्पर्यनिश्चयस्य कारणत्वादेव । ननु 'सर्वे सर्वार्थवाचकाः' इति न्यायेन घटपदात् पटप्रतीत्यापत्तिरित्यत आह—*सति तात्पर्ये इति* । *सर्वे सर्वार्थेति* । इदन्तु सर्वपदधर्मिकसर्वार्थप्रकारकसामान्यशक्तिग्रहस्वरूपम् ।

*शाब्दिकनय इति* । तार्किकमते तु नायं दोषः शङ्क्यः । शक्तिग्रहार्थस्मरणयोः समानधर्मप्रकारताकत्वस्य समानधर्मिताकत्वस्य च नियमादिति ध्येयम् ॥

*घटपदादिति* । निरुक्तशक्तिग्रहे सर्वपदत्वेन घटशब्दस्य सर्वार्थपदेन च घटरूपार्थस्यापि भानात्तस्यापि स्मृतौ तात्पर्यनिश्चयस्य हेतुत्वाभावे तत्पदात्तादृशार्थान्वयबोधापत्तिः स्यात्, सति च तात्पर्ये तस्मात्तदर्थबोधस्त्विष्ट एवेति भावः ।

*नानार्थेति* । तत्त्वं च नानार्थनिरूपितनानाशक्तिमत्त्वम् । अर्थे नानात्वञ्च नानाधर्मावच्छिन्नत्वम् । अत एव 'अर्थभेदाच्छब्दभेद' इति पक्षेऽपि घटत्वाद्येकधर्मावच्छिन्नवाचकपदानां न नानार्थकत्वम् । न च 'अर्थभेदाच्छब्दभेदः' इति पक्ष एव दुर्वच इति वाच्यम् । 'सकृदुच्चरितः शब्दः सकृदर्थङ्गमयति' इति न्यायस्य जागरूकत्वेन नानार्थस्थलीयातिप्रसङ्गवारणायावश्यकत्वेनार्थभेदे शब्दभेदाङ्गीकारमन्तरेण गत्यन्तराभावादिति दिक् ।

*वेदवाक्ये चेति* । अत्रापीश्वरतात्पर्यनिश्चयत्वेन न हेतुता, अपि तु वक्तृतात्पर्यनिश्चयत्वेनैव । वेदस्य स्वतः प्रमाणत्वेन तत्रेश्वरस्य वक्तुरभावादिति बोध्यम् ।

इत्यर्थदीपिकायां तात्पर्यनिरूपणम् ।

ननु प्रकरणादीनां शक्तिनियामकत्वे शक्त्यैव निर्वाहे किन्तात्पर्य्येणेति चेन्न । अस्माच्छब्दादर्थद्वयविशेष्यको बोधो जायते, अर्थद्वये शक्तिसत्त्वात्। तात्पर्य्यं तु क्वेति न जानीम इत्यनुभवविरोधात् । अत एव च पय आनये-त्युक्तेऽप्रकरणज्ञस्य दुग्धं जलं वा आनेयमिति प्रश्नः सङ्गच्छते ।

इत्याकाङ्क्षादिविचारः ॥

अथ सकलशब्दमूलभूतत्वाद्धात्वर्थो निरूप्यते । तत्र फलानुकूलो यत्नसंहितो व्यापारो धात्वर्थः फलत्वं च तद्धात्वर्थजन्यत्वे सति कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वम् । विभागजन्यसं-

---

अथावसरसङ्गत्या पूर्वनिरूपणानन्तरं सर्वशब्दानाम् उपजीव्यत्वान्मूलप्रकृतेर्धातोर्निरूपणमारभते—*अथेत्यादिना* । *तत्र*—निरूपणीयधात्वर्थविषये । अत्र प्रभाकरानुयायिनः—फलमेव धात्वर्थो भावना तु वाच्यैव न, तद्विषयकशाब्दबोधस्य सर्वत्राननुभवात् । किन्तु लिङ्ग्यैव । परं सा आख्यातवाच्येति । तन्न । "कर्तरि कृत्" इत्यत एव कर्तृग्रहणस्य "लः कर्मणि" इत्यत्रानुवृत्त्या तिङ्कृतोर्वैषम्यस्य दुरुपपादत्वात् । यत्नातिरिक्तः फलानुकूलो व्यापारो धात्वर्थो, यत्न आख्यातार्थः । धात्वर्थे कारकान्वय इति गुरुमतं 'तत्तु समन्वयात्' इति सूत्रस्थवाचस्पत्यादिग्रन्थेभ्यो ।लभ्यमानं भूषणकारोक्तयत्नाख्यातार्थत्ववादिनैयायिकमतदूषणग्रस्तं, तदेतत् ध्वनयन्नाह—*यत्नेति* । *यत्नसहित इति* । तेनाग्निसंयोगाधीनव्यापारसत्त्वे अयं न पचतीति प्रयोगो भवत्येव तत्र यत्नाभावात् । आमवातजडीकृतकलेवरस्य च यत्नसत्त्वेऽपि यत्नस्योत्थानानुकूलत्वाभावान्नोत्तिष्ठतीति प्रयोग इति भावः ।

*फलत्वञ्चेति* । लोके रूढ्या फलपदस्य लोकप्रसिद्धविक्लित्याद्यर्थोपस्थापकत्वेऽपि अत्र शास्त्रे तस्य पारिभाषिकत्वमेव । सकर्मकत्वादिव्यवहारानुरोधात् । तद्धात्वर्थजन्यत्वे सति तद्धातुजन्योपस्थितिविषयत्वम् । जन्यत्वञ्च—जन्यत्वनिष्ठप्रकारतानिरूपितप्रतीतिविषयत्वम् । गम्यादिधात्वर्थव्यापारस्य तत्त्ववारणाय सत्यन्तेति । गम्धात्वर्थव्यापारजन्यविभागेऽतिप्रसङ्गवारणाय विशेष्यदलमिति । एतेन सत्ताद्यर्थे नातिप्रसङ्ग इति प्राञ्चः ।

नवीनमतानुसारेण लक्षणं परिष्करोति—*तद्धात्वर्थेति* । अत्र जन्यत्वमारोपितानारोपितसाधारणं ग्राह्यम् । तेन ईश्वरस्तिष्ठति, पत्ये शेते इत्यादौ नातिप्रसङ्गः ॥

*विभागजन्यसंयोगादिति* । अत्रादिना संयोगजन्यविभागपरिग्रहः । यथा—'कुड्यात्पततोऽश्वात्पतत्यश्ववाहः' इत्यादौ गमिवत्पतेरपि उत्तरदेशसंयोगानुकूलव्यापाररूपं गमनमेवार्थः । तथापि कुड्यशब्दात्पञ्चम्या अन्यथानुपपत्त्या तत्रत्यसंयोगे

योगादिरूपे पतत्यादिधात्वर्थे विभागसंयोगयोः फलत्ववारणायोभयम्(१)। कर्मप्रत्ययसमभिव्याहारे तु फलस्य विशेष्यता। व्यापारत्वं च-धात्वर्थफलजनकत्वे सति धातुवाच्यत्वम्। अनुकूलत्वं संसर्गः। अनुकूलत्वं च-फलनिष्ठजन्यतानिरूपितजनकत्वम्।

"भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि"

---

विभागजन्यत्वमवश्यमङ्गीकरणीयम्। विभागावधेरेवापादानसंज्ञाविधानात्। *फलस्य विशेष्यतेति*। 'चैत्रेण पच्यते तण्डुल' इत्यत्र चैत्रवृत्तिव्यापारजन्या एकतण्डुलाभिन्नाश्रयिका विक्लित्तिरिति स्वमते फलविशेष्यबोधस्वीकारादिति भावः। *व्यापारत्वञ्चेति*। धातुवाच्यत्वमात्रोपादाने फलेऽतिव्याप्तिः। अतः सत्यन्तविशेषणम्। तावन्मात्रोपादाने कर्तृवृत्तिव्यापारविवक्षायां काष्ठतण्डुलादिव्यापारेऽतिप्रसङ्गः। अतस्तदुपादानम्। तन्निष्ठव्यापाराणां धात्वर्थविवक्षायान्तु तस्यापीष्टमेव। अत एव काष्ठं पचति स्थाली पचतीति सङ्गच्छते।

वस्तुतस्तु व्यापारपदस्य भावना-अविधा-साध्यत्वेनाभिधीयमाना क्रिया इत्यर्थः तथा च—साध्यत्वप्रकारकप्रतीतिविषयत्वं व्यापारत्वमिति फलितम्। न च घटं करोतीत्यादौ घटादीनामपि साध्यत्वेन प्रतीतिविषयत्वादतिव्याप्तिरिति वाच्यम्। पदान्तरसमभिव्याहाराप्रयोज्यत्वस्य प्रतीतौ विशेषणेनादोषात्। करोति पदसान्निध्यादेव साध्यत्वप्रत्ययः। स्वतस्तु घटादिपदात् सिद्धत्वेनैव द्रव्यप्रत्ययः। अधिश्रयणादधःश्रयणान्तक्रियासमूहस्य पदान्तरसमभिव्याहारं विनापि साध्यत्वेन प्रतीतिविषयत्वात् व्यापारत्वमक्षतमिति दिक्।

*भावप्रधानेति*। भावः-क्रिया, प्रधानं यस्मिन् तत्। भावोऽत्र क्रिया सा च करणव्युत्पत्या व्यापारं, कर्मव्युत्पत्या च फलं बोधयति। तथा च आख्याते फलव्यापारयोः प्राधान्यमिति फलितम्। कर्तृवाच्ये व्यापारस्य, कर्मवाच्ये तु फलस्येति विवेकः। सत्वं-द्रव्यं, प्रधानं येषु तानीति बहुव्रीहिः। एवञ्चोक्तनिरुक्तात् भूवादिसूत्रस्थक्रियाप्राधान्यबोधकभाष्याच्च वैयाकरणानां व्यापारमुख्यविशेष्यकः शाब्दबोधः फलित इति भावः।

*सत्वप्रधानानीति*। अस्य लक्षणं-सत्वं-द्रव्यं, प्रधानं यत्रेति विग्रहाल्लिङ्गादिनिष्ठप्रकारतानिरूपितविशेष्यताशाल्यर्थप्रतिपादकत्वं नाम लक्षणमित्यर्थः। विशेष्यार्थकत्वस्य निपाताऽऽख्यातादावतिप्रसक्तत्वात्, तद्वारणाय प्रकारतानिरूपितत्वा-

---

(१) विभागस्य फलत्ववारणाय सत्यन्तापादानम्। संयोगे तद्वारणाय प्रकारतावत्त्वान्तम्। तेन वृक्षात् पर्णं भूमौ पततीत्यादौ विभागाश्रयस्य वृक्षादेः संयोगाश्रयस्य भूम्यादेश्च न कर्मत्वमित्यादिकमूह्यम्।

इति निरुक्तोक्तेर्व्यापारविशेष्यको बोधः। तत्र तिङ्वाच्यं संख्याविशिष्टं कारकम् , कालश्च व्यापारविशेषणम् ॥

परे तु फलव्यापारयोर्धातोः पृथक्शक्तावुद्देश्यविधेयभावेनान्वयापत्तिस्तयोः स्यात्। पृथगुपस्थितयोस्तथा अन्वयस्यौत्सर्गिकत्वात्। किञ्चैकपदे व्युत्पत्तिद्वयकल्पनेऽतिगौरवम्।

तथाहि— फलविशेषणकव्यापारबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम् , व्यापारविशेषणकफलबोधे कर्मप्रत्ययसमभिव्या-

---

न्तं विशेषणम्। व्यक्तिबोधस्य धर्मविषयकत्वनियमेन, जातिप्रकारतानिरूपितत्वस्यातिप्रसङ्गावारकत्वात्तदनुपादानम्। लक्ष्यतावच्छेदकाऽनाक्रान्तेषु यादृच्छिकेषु अतिप्रसङ्गस्तु लक्षणे तद्व्यतिरिक्तत्वविशेषणेनैव वारणीय इति दिक्।

*तिङ्वाच्यमिति*। तिङोऽर्थः कर्ता, कर्म, संख्या, कालश्च। तत्र संख्या कर्तृप्रत्यये कर्तरि, कर्मप्रत्यये कर्मण्यन्वेति। तद्विशिष्टकर्तुश्च धात्वर्थव्यापारेऽन्वय इति बोध्यम्।

अत्र प्राञ्चः—धातूनां फलव्यापारयोर्भिन्ना शक्तिः, न तु विशिष्टा। अत एव

"फलव्यापारयोर्धातुराश्रये तु तिङः स्मृता"

इति हर्युक्तिः सङ्गच्छते। ननु हरिशब्दादुपस्थितयोः सिंहसूर्ययोः परस्परान्वयबोधवारणाय तत्पदजन्य-तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति अपरपदजन्यपदार्थोपस्थितिः कारणमिति कार्यकारणभावः फलितः। तेन एकपदोपस्थाप्ययोरर्थयोः परस्परान्वयबोधोऽव्युत्पन्न इति फलव्यापारयोरन्वयासम्भव इति चेन्न। व्युत्पत्तिवैचित्र्येण तथान्वयस्वीकारादिति तत्र नव्याः। स्वमतम्प्रकटयति—*परे त्वित्यादिना*।

*उद्देश्यविधेयभावेनेति*। तात्पर्यविशेषनिश्चयादिवशेन कदाचित् फलमुद्दिश्य व्यापारस्य, कदाचिच्च व्यापारमुद्दिश्य फलस्य विधानं स्यादिति तात्पर्यम्।

*पृथगुपस्थितयोरिति*। विभिन्नशक्तिग्रहजन्यविभिन्नोपस्थितीयविषयतावतोरिति भावः। तेन यथा नीलो घट इत्यादौ नीलघटयोर्विभिन्नशक्तिग्रहजन्यविभिन्नोपस्थितिविषययोरुद्देश्यविधेयभावेन अन्वयबोधस्तथात्रापि स्यादिति भावः।

ननु एकपदाद्विभिन्नशक्तिज्ञानजन्योपस्थितपदार्थद्वयस्य उद्देश्यविधेयभावेनान्वये प्रमाणाभावः, दृष्टान्ताभावश्चेति न पृथक्शक्तिमतां प्राचां दोष इत्यरुचेराह—*किञ्चेति*।

कृतधातुजन्योपस्थितिः कारणमिति कार्य्यकारणभावद्वयकल्पनम् , धातोरर्थद्वये शक्तिद्वयकल्पनं, धातोर्बोधजनकत्वसम्बन्धद्वयकल्पनं चातिगौरवम् । तस्मात्फलावच्छिन्ने व्यापारे; व्यापारावच्छिन्ने फले च; धातूनां शक्तिः, कर्तृकर्मार्थकतत्तत्प्रत्ययसमभिव्याहारश्च तत्तद्बोधे नियामक इत्या (१) हुः ॥

---

*कार्यकारणभावद्वयकल्पनमिति* । फलत्वावच्छिन्नप्रकारतानिरूपितव्यापारविशेष्यशाब्दबुद्धित्वावच्छिन्नं प्रति कर्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम् । एवं व्यापारत्वावच्छिन्नप्रकारतानिरूपितफलविशेष्यकशाब्दबुद्धित्वावच्छिन्नं प्रति कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणमिति कार्यकारणभावद्वयकल्पनरूपगौरवं पृथक्शक्तिमतां प्राचां स्यादिति भावः ।

ननु विशिष्टशक्तिस्वीकारे विनिगमनाविरहात्सर्वत्र बोधापत्तिरत आह—*कर्तृककर्मार्थकेति* । फलावच्छिन्नव्यापारबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणम् । एवं व्यापारावच्छिन्नफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणमिति न सर्वत्र सर्वबोधप्रसङ्ग इति दिक् ।

गुरुचरणास्तु = प्राचाम्मतमेव सम्मतमाहुः । तथा हि—विशिष्टे शक्तिकल्पने शक्यतावच्छेदकत्वं फलावच्छिन्नव्यापारत्वस्य; व्यापारावच्छिन्नफलत्वस्य च; कल्पितमिति गौरवम् । फलव्यापारयोः पदार्थैकदेशत्वेन तत्र कर्तृकर्मादीनामन्वयासम्भवश्च । 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति न्यायात् । अपरं दूषणन्तूभयमते समानमेव । अपरञ्च प्राचाम्—एकवृन्तावलम्बिफलद्वयवत् उभयांशे एका खण्डशः शक्तिरिति न शक्तिद्वयकल्पनं न वा बोधजनकत्वसम्बन्धद्वयकल्पनम् , अपि तु नव्यानामेव

---

(१) यद्यपि फलावच्छिन्नव्यापारत्वस्य व्यापारावच्छिन्नफलत्वस्य च शक्यतावच्छेदकत्वकल्पनप्रयुक्तं गौरवमेतेषां मते स्फुटं, तथापि भिन्नशक्तिवादिनां फलविशेषणकव्यापारविशेष्यकावान्तरवाक्यार्थबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्यसमूहालम्बनात्मकोपस्थितिः कारणम् , व्यापारविशेषणकफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्यसमूहालम्बनात्मकोपस्थितिः कारणमितिकार्यकारणभावद्वयकल्पनेऽतिगौरवम् । विशिष्टशक्तिवादिनां तु तत्तत्समभिव्याहारवशाद् अवान्तरवाक्यार्थबोधस्थानीया विशिष्टोपस्थितिरेवेति न तेषामुक्तकार्यकारणभावद्वयम् । एवं धातोःफलव्यापारसमूहार्थे उपस्थितिशक्तिकल्पनं विशिष्टार्थे शाब्दबोधशक्तिकल्पनं, शक्तेः बोधजनकतायाश्च असम्बद्धे धातौ अनुपपत्त्या विशिष्टार्थनिरूपितसम्बन्धद्वयकल्पनं च विशिष्टधातावित्यतिगौरवमिति दिक् ।

यत्तु मीमांसकाः फलं धात्वर्थो, व्यापारः प्रत्ययार्थ, इति वदन्ति। तन्न। "लः कर्मणि"इत्यादिसूत्रविरोधापत्तेः। नहि तेन व्यापारस्य प्रत्ययार्थता लभ्यते।

किञ्च पचति पक्ष्यति पक्वानित्यादौ फूत्कारादिप्रतीतये तत्रानेकप्रत्ययानां शक्तिकल्पनापेक्षयैकस्य धातोरेव शक्तिकल्पनोचिता।

किञ्च फूत्कारादेः प्रत्ययार्थत्वे गच्छतीत्यादौ तत्प्रतीतिवारणाय तद्बोधे पचिसमभिव्याहारस्यापि कारणत्वकल्पनेऽतिगौरवम्।

किञ्च सकर्मकाकर्मकव्यवहारोच्छेदापत्तिः। न च प्रत्ययार्थव्यापारव्य-

---

कल्पनीयम्भवेदिति सुधियो विभावयन्तु।

*मीमांसका इति*। व्यापारेणाश्रयस्याक्षेपात् व्यापारमात्रं प्रत्ययार्थः, व्यापारस्य प्रत्ययेनैव लाभाच्च। 'अनन्यलभ्यः शब्दार्थः' इति न्यायात् फलमात्रं धात्वर्थ इति तेषाम्मते सिद्धान्त इति भावः।

मण्डनमिश्रास्तु—फलमात्रं धात्वर्थः, व्यापारः-प्रत्ययार्थः; पाक इत्यत्रापि घञर्थ एव व्यापारः। कर्तृत्वमपि प्रत्ययार्थव्यापाराश्रयत्वात्। प्रत्ययार्थव्यापारव्यधिकरणफलाश्रयत्वमेव च कर्मत्वम्। 'देवदत्तेन पाकः' इत्यत्र तृतीयार्थ एव व्यापारः। णिजन्ते तु व्यापारस्याख्यातार्थत्वादुभयोः कर्तृता। फलरूपक्रियावाचकत्वादेव च धातुत्वमिति वदन्ति। तन्निराकरोति—*तन्नेति*।

ननु "लः कर्मणि च" इति सूत्रे कर्तृकर्मपदे कर्तृत्वकर्मत्वधर्मपरे। तथा च-कर्मणि कर्तरि लकार इत्यस्य कर्तृत्वे कर्मत्वे लकार इत्यर्थः। एवञ्च 'प्रकृतिजन्यबोधे प्रकारीभूतो भावः' इति सिद्धान्तेन कर्तृपदस्य व्यापाराश्रयार्थकत्वात्तत्र व्यापारस्य विशेषणत्वात्तस्य प्रत्ययार्थत्वं निर्बाधमित्यत आह—*किञ्चेति*।

ननु व्यापारेऽनेकप्रत्ययानां शक्तिकल्पने यथा गौरवं, तथा धातूनामपीत्यत आह-*किञ्चेति*।

*फूत्कारेति*। फूत्कारत्वादिधर्मपुरस्कारेणैव लादिप्रत्ययानां व्यापारे शक्तिबोध्या। एवं सति गच्छतिभवतीत्यादावपि उक्तधर्मपुरस्कृतव्यापारमात्रोपस्थितौ सति तात्पर्ये फूत्कारादेरपि बोधप्रसङ्ग इति भावः।

ननु धातुत्वावच्छिन्नस्य व्यापारे शक्तिकल्पनायामपि विशेषव्यापारबोधम्प्रति तत्तद्धातुसमभिव्याहारस्य कारणत्वमवश्यमेव वक्तव्यम्। एवञ्च धात्वर्थो व्यापार इति वदतामपि तुल्यं गौरवमित्यत आह—*किञ्चेति*।

*सकर्मकाकर्मकेति*। व्यापारस्य धात्वर्थे 'स्वार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वम्'। 'स्वार्थव्यापारसमानाधिकरणफलवाचकत्वम्-अकर्मकत्वमिति क-

धिकरणफलवाचकत्वं सकर्मकत्वम्, तन्मते तत्समानाधिकरणफलवाचकत्व-मकर्मकत्वं च, प्रत्ययार्थव्यापाराश्रयत्वं कर्तृत्वम्, घटं भावयतीत्यादौ णिजर्थव्यापारव्यधिकरणफलाश्रयत्वेन घटादेः कर्मत्वमिति वाच्यम्। अभिधानानभिधानव्यवस्थोच्छेदापत्तेः। न च व्यापारेणाश्रयाक्षेपात्कर्तुरभिधानम्, कर्माख्याते च प्रधानेन फलेन स्वाश्रयाक्षेपात्कर्मणोऽभिधानमिति वाच्यम्। जातिशक्तिवादे जात्याक्षिप्तव्यक्तेरिवाश्रयप्राधान्यापत्तौ "क्रियाप्रधानमाख्यतम्" इति यास्कवचोविरोधापत्तेः।

किञ्च फलस्य धातुना तदाश्रयस्य चाक्षेपेणैव लाभसम्भवेन "लः कर्मणि" इत्यस्य वैयर्थ्यापत्तेः। कर्मकर्तृकृतां कारकभावनाभयवाचकत्वे गौरवाच्च।

किञ्च भावविहितघञादीनां व्यापारावाचकत्वे ग्रामो गमनवानित्याद्यापत्तिः। तद्वाचकत्वे तु तेनापि स्वाश्रयाक्षेपे कर्तुरभिधानापत्तिः।

---

क्षणेन सकर्मकत्वाकर्मकत्वव्यवहारः समुपपद्यते। प्रत्ययार्थत्वे तु नेयं व्यवस्था भवेदिति भावः।

ननु प्रत्ययार्थव्यापाराश्रयस्य कर्तृत्वाङ्गीकारे घटं भावयतीत्याद्यनुपपत्तिः। तथा हि—णिच्प्रत्ययार्थप्रेषणव्यापाराश्रयत्वस्य घटादावसम्भवेन कर्तृत्वाभावात् अणि कर्तुर्णौ कर्मत्वानुपपत्तिरत आह—*घटं भावयतीति*।

*अभिधानानभिधानेति*। 'कटं भीष्मं कुरु' इत्यत्र विशेषणेन कर्मत्वोक्तावपि द्वितीयोपपत्तये कृत्तद्धितसमासैरभिहिते क्वचिन्निपातेन चेति परिगणनस्य "अनभिहिते" इति सूत्रे भाष्ये दर्शनात्तैरेवाभिधाने कर्मत्वादीनां द्वितीयादीनां साधुत्वाभावे भाष्यकृत्स्वारस्यः स्यात्, फलाश्रयस्य कर्मत्वेन व्यापाराश्रयस्य कर्तृतया च त्वन्मते तयोस्तिङाऽनभिधानेन च 'हरिम्भजति भक्तः' इत्यत्र भक्ते तृतीयायाः 'पच्यते तण्डुलः' इत्यत्र तण्डुले द्वितीयायाश्चापत्तौ परिगणनं भाष्योक्तमसङ्गतं स्यादिति भावः।

कथञ्चिदाक्षिप्तस्य कर्तुरप्राधान्येऽपि दोषो दुरुद्धर एवेत्यत आह—*किञ्चेति*।

*वैयर्थ्यापत्तेरिति*। अत्रेदं तात्पर्यम्—फलाश्रयस्य कर्मण आक्षेपेण लाभसम्भवे "लः कर्मणि च भावे चाकर्मकेभ्यः" इत्यादिना कर्मणि लकारविधानवैयर्थ्यं स्यादिति। *गौरवादिति*। एकस्यैव प्रत्ययार्थस्य अर्थद्वये शक्तिकल्पने गौरवमिति भावः।

यद्यपि उभयवाचकत्वं गौरवापत्तिभिया कृता न स्वीक्रियेत, तदा दूषणान्तरापत्तिः स्यादत आह—*किञ्चेति*।

किञ्च 'गुरुः शिष्याभ्यां पाचयति' इत्यादौ "हेतुमति च" इतिसूत्रबलात् प्रयोजकव्यापारस्य णिजर्थत्वे स्थिते प्रयोज्यव्यापार आख्यातार्थो वाच्यः। एवञ्च सङ्ख्यायाः स्ववाचकाख्यातार्थव्यापारेऽन्वयिन्येवाऽन्वयाच्छिष्या-भ्यामिति द्विवचनानापत्तिः। पाचयतीत्येकवचनानापत्तिश्च। गुरोरनभिधानेन तत्र प्रथमाया अनापत्तेश्च। शिष्यशब्दात्तदापत्तेश्चेत्यन्यत्र विस्तरः।

सर्वकारकान्वयितावच्छेदकधर्मवती क्रिया।

तदाह—यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ॥
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥ १ ॥
गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ॥
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥ २ ॥

इति भूवादिसूत्रस्थभाष्यार्थप्रतिपादकहरिग्रन्थात्। क्रमजन्मनां व्यापा-

---

'फलमात्रं धात्वर्थः' इत्यत्र दूषणान्युक्त्वा आख्यातार्थव्यापारे दूषणान्याह—*किञ्चेति*। *अनापत्तेरिति*। अनभिहिते कर्तरि तृतीयापत्तेश्चेत्यर्थः।

*सर्वकारकेति* सर्वेषां कारकाणां धात्वर्थक्रियायामेवान्वयः। उक्तञ्च भूषणे—

"सम्बोधनान्तं कृत्वोऽर्थाः कारकं प्रथमो वतिः"।
धातुसम्बन्धाधिकारनिष्पन्नमसमस्तनञ् ॥
तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम्,
साधुत्वमष्टकस्यास्य क्रिययैवावधार्यताम्" ॥ इति ॥

*कारकान्वयितेति*। कारकान्वयित्वञ्च—कारकनिष्ठविषयतानिरूपितविषय-ताश्रयत्वम्। कारकाणां क्रिययैवान्वयात्, क्रियान्वयं विना कारकत्वानुपपत्तेश्च। तथा च—कारकान्वयितावच्छेदकधर्म्मवत्वं तत्वमिति फलितम्।

*यावदिति*। यावत्—सर्वम्। सिद्धम्—निष्पन्नम्, 'विद्यमानध्वंसप्रतियोगि 'अपाक्षीत्' इत्यादौ। असिद्धम्—अनिष्पन्नम्, भूतभिन्नम्-वर्तमानम्, वर्तमानप्राग-भावप्रतियोगि च 'पचति' 'पक्ष्यति' इत्यादौ।

*आश्रितक्रमेत्यादि*—आश्रितं क्रमरूपं यस्यास्तत्वात् पूर्वापरीभूतावयवकत्वा-दित्यर्थः। तदीयाऽवयवानामधिश्रयणाद्यधःश्रयणपर्यन्तानां क्रमेणोत्पत्तेः क्रियापदेन सा उच्यते। यत्र च न क्रमिकावयवको व्यापारः, तत्र रूढिरेवादरणीया, पौर्वापर्यारोपो वा। फलस्यापि स्वजनकव्यापारगतपौर्वापर्यारोपेण तथैव भानम्। अत एव तन्मात्र-वाचकस्य धातुत्वसिद्धिरिति भावः। *गुणभूतैरिति*। तिरोहितैः तत्तद्रूपेणाप्रतिपाद्य-मानैरिति यावत्। *अवयवैः*—तत्सदृशैः। *क्रमजन्मनाम्*—क्रमेण जन्म यासा-मिति बहुव्रीहिः। *समूहः*-समुदायभावमापन्नः, यथाऽवयविनि शरीरे हस्तपादाद-

राणां समूहं प्रति गुणभूतैरवयवैर्युक्तःसङ्कलनात्मिकयैकत्वबुद्धया प्रकल्पिताभेदरूपः समूहः क्रियेति व्यवह्रियत इति द्वितीयकारिकार्थः । अत्रावयवाश्रयं पौर्वापर्यं समुदायाश्रयमेकत्वम् । क्षणनश्वराणां व्यापाराणां वस्तुभूतसमुदायाभावात् बुद्धयेत्युक्तम्।पचति पक्ष्यतीत्यादावसिद्धम्, अपाक्षीदित्यादौ सिद्धमसिद्धं वा साध्यत्वेनाभिधीयमानं क्रिया। आश्रितेति योगदर्शनं कृतम्, अवयवानां क्रमेणोत्पत्त्या । अत एवाश्रितक्रमरूपा क्रियेति आदिमकारिकार्थः । एकैकावयवेऽपि समूहरूपारोपादधिश्रयणकालेऽपि पचतीति व्यवहारः

तदुक्तम्—एकदेशे समूहे वा व्यापाराणां पचादयः ।
स्वभावतः प्रवर्तन्ते तुल्यरूपं समाश्रिताः ॥ इति ।

अत्र केचित्—सिद्धत्वम्–क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकवैजात्यवत्त्वे सति कारकत्वेन क्रियान्वयित्वे सति कारकान्तरान्वयायोग्यत्वम् । साध्यत्वं च—क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं सत् कारकान्तरान्वययोग्यतावच्छेदकरूपवत्त्वम् । हिरुगाद्यव्ययानां साध्यत्वाभावेऽपि क्रियावाचकत्वव्यवहारस्तु क्रियामात्रविशेषणत्वात् । तत्र सिद्धत्वं पाक इत्यादौ घञादिवाच्यम् । साध्यत्वं तु सर्वत्रैव धातुप्रतिपाद्यम् ।

ननु 'हरिं नमेच्चेत्सुखं यायात्' इत्यत्र क्रियाया अपि क्रियान्तराकाङ्क्षत्वेन सिद्धत्वमस्तीति चेन्न । चेच्छब्दसमभिव्याहारेणाकाङ्क्षोत्थापनादित्याहुः ।

वस्तुतः साध्यत्वम्—निष्पाद्यत्वमेव, तद्रूपेणैव बोधः । स्पष्टं चेदम् "उपपदमतिङ्" इत्यादौ भाष्ये ।

---

योऽवयवाः क्रमेण जायन्ते, ते च अवयविना सहाभेदमुपगच्छन्ति, यथा फूत्कारादयोऽपि क्रमेणोत्पद्यमानाः समुदायभावमासाद्य विक्लित्यादिफलानुकूलक्रियात्वमुपगच्छन्तीति भावः । *एकैकेति* । एकस्मिन् व्यापारेऽपि समूहरूपक्रियारोपेण पचतीति प्रयोगःप्रयुज्यते । अत्रैवार्थे हरिकारिकां प्रमाणत्वेनोपन्यस्यति *एकदेशे इत्यादिना* ।

*अत्र केचिदिति* । क्रियास्वरूपघटकसिद्धत्वसाध्यत्वे किमित्याकाङ्क्षायां भूषणकारोक्तमेवकथयति—*सिद्धत्वमित्यादिना* ।

स्वसिद्धान्तमाह—*वस्तुत इत्यादिना* । तत्तद्धातुवाच्यतावच्छेदकधर्म्मप्रकारकबोध इत्यत आह–*तत्तद्रूपेणैवेति*। करोतेरुत्पादनार्थत्वात् घटवृत्त्युत्पत्त्यनुकूलव्यापारानुकूल-एकाश्रयको वर्तमानो व्यापार इति शाब्दबोधः । उत्पत्तिमत्वरूपनिष्पा-

ननु घटं करोतीत्यादौ द्रव्यस्यापि साध्यत्वेन प्रतीतिरितिचेन्न। करोति पदादिसमभिव्याहारात् तथा प्रत्ययेऽपि स्वतो घटादिपदाद् द्रव्यस्य सिद्धत्वेनैव प्रतीतेः।

अस्तिभवतिवर्ततेविद्यतीनामर्थः—सत्ता। सा चानेककालस्थायिनीति कालगतपौर्वापर्य्येण क्रमवतीति तस्याः क्रियात्वम्। सत्तेह—आत्मधारणम्। सकर्मकत्वञ्च-फलव्यधिकरणव्यापारवाचकत्वम्, फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम्। क्वचित्तु फलांशाभावादकर्मकत्वम्। यथाऽस्त्यादौ केवलं सत्तादिरेवार्थः। फलांशस्य सूक्ष्मदृष्ट्याऽप्यप्रतीतेः। "उत्पन्नस्य सत्त्वस्य स्वरूपधारणरूपां सत्तामाचष्टेऽस्त्यादिः" इति निरुक्तोक्तेश्च।

वस्तु तस्तु शब्दशास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम्। तदनन्वय्यर्थकत्वमकर्मकत्वम्। तेन 'अध्यासिता भूमय' इत्यादिसिद्धिः। अन्वयश्च पृथग्बुद्धेन संसर्गरूपः। अन्वयपदस्य तत्रैव व्युत्पत्तेः। तेन जीवतीत्यादौ न दोषः। तत्र प्राणादिरूपकर्मणो धारणार्थधात्वर्थात्पृथगबोधादिति "सुप आत्मन" इति सूत्रे भाष्ये स्पष्टम्। "अधिशीङ्स्थासाम्" इत्यनेन भूमय इत्याधारस्य कर्मत्वम्।

जानातेर्विषयतया ज्ञानं फलम्, आत्ममनःसंयोगो-व्यापारः। अत एव मनो जानातीत्युपपद्यते। आत्माऽत्रान्तःकारणम्, मनोऽपि तद्वृत्तिविशेषरूपम्। * त्मा आत्मानं जानातीत्यादौ अन्तःकरणावच्छिन्नः कर्ता शरीरावच्छिन्नं कर्मेति "कर्मवत्" सूत्रे भाष्ये स्पष्टम्।

यत्तु आवरणभङ्गो विषयता वा फलम्, व्यापारस्तु ज्ञानमेवेति। तन्न

---

द्यत्वे साध्यत्वं घटेऽतिव्याप्तमित्याशङ्क्याह—*नन्वित्यादिना*।

*सत्तेति*। सत्तेह आत्मधारणम्। आत्मधारणस्य बहुकालापेक्षितत्वम्। यद्यपि कालस्याखण्डत्वमस्ति, तथापि तत्रावयवान् परिकल्प्य तद्गतपौर्वापर्येण सत्तायां क्रमभासमानत्वेन तस्याः क्रियात्वं बोध्यम्।

ननु फलव्यधिकरणव्यापारवाचकत्व सकर्मकत्वं कालादिकर्म्मकधातुष्वव्याप्तमित्यत आह*वस्तुतस्त्वति*।*सकर्म्मकत्वमिति*.कर्मसंज्ञावदर्थनिष्ठविषयतानिरूपितविषयताप्रयोजकत्वे सति धातुत्वमिति सकर्म्मकस्य लक्षणं ध्येयम्।* अकर्म्मकत्वमिति*। कर्म्मसंज्ञकार्थनिष्ठविषयतानिरूपितविषयतावदर्थबोधकत्वाभाववत्वमकर्म्मकत्वम्।

*अध्यासिता इति*। 'अध्यासिता भूमयः' इत्यत्र 'अधिशीङ्स्थासाङ्कर्म" इति सूत्रेण भूमेराधारत्वेन कर्मसंज्ञाविधानात्, शब्दशास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वेन सकर्म्मकत्वात्कर्मणि निष्ठेतिभावः।*न दोष इति*। जीवतेः प्राणधारणस्य धात्वा-

कर्मस्थक्रियकत्वापत्तेः। तद्व्यवस्था चेत्थमुक्ता हरिणा—

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता॥ इति।

अस्यार्थः—यत्र कर्मणि कर्तरि वा क्रियाकृतो विशेषः कश्चिद् दृश्यते, तत्र क्रिया व्यवस्थितेत्युच्यते। नन्वेवं पच्यादिकर्तर्यपि श्रमादिरूपविशेषस्य दर्शनादिदमयुक्तम्। किञ्च चिन्तयति पश्यतीत्यादीनां कर्तृस्थभावकत्वानुपपत्तिः। कर्तरि क्रियाकृतविशेषाभावात्। अत आह—अन्येषामिति। मते इति शेषः। यत्र कर्तृकर्मसाधारणरूपं फलं शब्देन प्रतिपाद्यते, स कर्तृस्थभावको यथा—पश्यति घटम्, ग्रामं गच्छति, हसतीत्यादौ। तत्र विषयतासमवायाभ्यां ज्ञानमुभयनिष्ठम्, योगश्चोभयनिष्ठः। एवं हसोऽपि। न हि विषयताऽऽवरणभङ्गावेवम्। यत्र कर्तृवृत्तिकर्मस्थफलं स कर्मस्थभावकः। यथा—भिनत्तीत्यादौ। न हि द्विधाभवनादि कथमपि कर्तृनिष्ठमिति हेलाराजः। तथा चावरणभङ्गस्य विषयतायाश्च कर्ममात्रनिष्ठत्वाज्जानातेरपि कर्मस्थक्रियकत्वापत्तिरित्यलम्।

इच्छतेरिच्छानुकूलं ज्ञानमर्थः। अतीतानागतयोरपि बुद्ध्युपारोहात् फलशालित्वम्।

पतिर्गमिवत्सकर्मकः। नरकं पतित इत्यादिप्रयोगात्। विभागजन्यसंयोगमात्रपरत्वेऽकर्मक इति। कृञ उत्पत्तिव्यधिकरणस्तदनुकूलो व्यापारोऽर्थः। फलमात्रार्थकत्वेऽकर्मकत्वापत्तिर्यतिवत्। किञ्च कर्मस्थभावकत्वाभावात् कर्मकर्तरि यगाद्यनापत्तिः। कृतिरित्यादौ धातूनामनेकार्थत्वात् यत्नमात्रे वृत्तिः।

---

र्थेऽन्तर्भूतत्वेन अन्वयितावच्छेदकरूपेण धारणस्यानुपस्थितत्वाच्च दोष इति भावः।

*विशेषदर्शनमिति* । यत्र च कर्म्मणि न क्रियाकृतो भेदो ज्ञायते तत्र कर्तृस्थक्रियत्वमिति भावः। *अन्येषाम्*—तार्किकाणाम्मत इति भावः।

*नरकं पतित इति* । फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वं यथा गम्लधातोस्तथा पत्लृधातोरपि विभागजन्योत्तरदेशानुकूलव्यापारोऽर्थोऽङ्गीकार्यः। अत एव "द्वितीयाश्रितातीतपतित" इति सूत्रे पतितपदेन द्वितीयासमासः सङ्गच्छते॥

*यागाद्यनापत्तिरिति* । यत्नस्य चेतनगुणत्वादचेतने घटादौ तदसम्भवेन क्रियते घटः स्वयमेवेतिप्रतियोगासम्भव इति भावः। *धातूनामनेकार्थत्वादिति* । अत एव "कुर्द खुर्द गुर्द गुद क्रीडायामेव" इतिधातुपाठस्थे एवकारश्चरितार्थ इति बोध्यम्।

यद्वा यत्नकृतिशब्दयोरपि व्यापारसामान्यवाचितैव। अत एव स्थालीस्थे यत्ने पचिना कथ्यमाने स्थाली पचतीति "कारके" इति सूत्रे भाष्ये उक्तमित्यलम्।

यत्तु तार्किकाः-फलव्यापारौ धात्वर्थः। लकाराणां कृतावेव शक्तिर्लाघवात्, नतु कर्तरि, कृतिमतः कर्तृत्वेन तत्र शक्तौ गौरवात्। प्रथमान्तपदेनैव तल्लाभाच्च। आख्यातार्थे धात्वर्थो विशेषणम्, प्रकृत्यर्थप्रत्ययार्थयोः सहार्थत्वे प्रत्ययार्थस्यैव प्राधान्यात्। प्रथमान्तार्थे आख्यातार्थो विशेषणम्। अनुकूलत्वमाश्रयत्वञ्च संसर्गः। तथाच चैत्रः पचतीत्यादौ विक्लित्त्यनुकूलव्यापारानुकूलकृतिमांश्चैत्र इति बोधः। रथो गच्छतीत्यादौ रथस्याचेतनत्वात् यत्नशून्यत्वेन व्यापारे आश्रयत्वे वा आख्यातस्य लक्षणेत्याहुः॥

तन्न। युष्मदस्मदोर्लकारेण सामानाधिकरण्याभावात् पुरुषव्यवस्थाऽनापत्तेः। पचन्तं चैत्रं पश्य, पचते देवदत्ताय देहीत्यादौ शतृशानजादीनामपि तिबादिवल्लादेशाविशेषेण तेभ्यः कृतिमात्रबोधापत्तेश्च। नचेष्टापत्तिराश्रयाश्रयिभावेन कर्मणि सम्प्रदाने च कृतेरन्वयादिति वाच्यम्।

---

ननु धातूनामनेकार्थत्वात् कृतिरूपोऽर्थ एव मुख्यो भवतु, उत्पत्त्यनुकूलो व्यापार एव गौणः कल्प्यतामत आह-*यद्वेति*। आख्यातस्य कृतौ शक्तिरिति तार्किकमतं प्रबलप्रमायुक्तिभ्यां खण्डयितुं तमनुवदति—*यत्त्वित्यादिना*। *गौरवादिति*। कृत्याश्रयत्वमेव कर्तृत्वमिति त्वन्मते कर्तुराख्यातार्थत्वेऽनन्तकृतीनां वाच्यतावच्छेदकत्वकल्पनं गौरवम्। मन्मते तु कृतेरनन्तत्वेऽपि कृतित्वजातौ एकस्यामेव तत्कल्पनमित्यस्ति लाघवमिति भावः। *प्रथमान्तार्थ इति*। एवञ्चात्र आख्यातार्थकृतिप्रकारकान्वयबोधम्प्रति प्रथमान्तपदजन्योपस्थितिः कारणमिति कार्यकारणभावः संपन्नः।

*सामानाधिकरण्याभावादिति*। "युष्मद्युपपदे समानाधिकरणे" इत्यादिसूत्रेषु समानाधिकरणपदसत्त्वात्; तत्र तत्र स्वलकारवाच्यकारकवाचित्वरूपसामानाधिकरण्यस्यैव स्वीकारात्; कृतिवाच्यत्ववादित्वन्मते तदसम्भव इति भावः। *शतृशानजादीनामपीति*। शतृशानजादीनामपि 'कर्तरि कृत्' इत्यनेन सूत्रेण कर्तर्य्येव विधानस्याभ्युपगमेन तिबादिवत् कृतिवाचकत्वापत्तौ केवलकृतिमात्रदर्शनदशायामपि पचन्तं चैत्रं पश्य पचमानं चैत्रं पश्येतिप्रयोगापत्तिः स्यात्तवेति भावः। *आश्रयाश्रयिभावेनेति*। कृतेराश्रयतासम्बन्धेन प्रथमार्थेऽन्वय इति तात्पर्यवर्णनं तु अज्ञानमूलकमेवेति भावः।

नामार्थयोरभेदान्वयो व्युत्पन्न इति व्युत्पत्तिभङ्गापत्तेः।

ननु फलमुखगौरवं न दोषायेति न्यायेन शत्रादीनां कर्तरि शक्तिः, तिबादीनां कृतावेव; इति चेत्, न। स्थान्येव वाचको लाघवात्, आदेशानां बहुत्वेन तेषां वाचकत्वे गौरवमिति हि तव मतम्। एवं च तिबादीनां शत्रादीनां च स्थानिस्मारकतया लिपिस्थानीयत्वम्, बोधकस्तु लकार एव। स च शत्राद्यन्ते कर्तरि शक्तस्तिवाद्यन्ते कथं कृतिं बोधयेत्। 'अन्यायश्चानेकार्थत्वम्' इति न्यायात्।

ननु "लः कर्म्मणि" इति सूत्रे कर्तृकर्म्मपदे भावप्रधाने, तथा च कर्तृत्वं कृतिः, कर्म्मत्वं फलम्, तयोः शक्तौ सूत्रस्वरसः। कर्म्मप्रत्ययान्ते पच्यते ओदनो देवदत्तेनेत्यादौ देवदत्तनिष्ठकृतिजन्यव्यापारजन्यविक्लित्तिमान् ओदन इति बोधः। "कर्तरि कृत्" इति सूत्रे तु कर्तरीति पदस्य धर्मिप्रधानत्वात् कृत्याश्रये शत्रादीनां शक्तिरिति चेत्, न। "कर्तरि कृत्" इति सूत्रे यत्कर्तृग्रहणं तस्यैव "लः कर्म्मणि" इति सूत्रे चकारानुकृष्टत्वेन भावप्रधानत्वे सूत्रस्वरसाभावात्। शत्रादीनां 'स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वम्' इति न्यायेन स्थान्यर्थेन निराकाङ्क्षत्वादाकाङ्क्षितविधानं ज्याय इति न्यायात् "कर्त्तरि कृत्" इत्यनेन शक्तिग्रहाभावात्। अन्यथा देवदत्तेन शय्यमाने आस्यमाने च यज्ञदत्तो गत इत्यादौ भावे शानजनापत्तेः।

ननु नामार्थयोरभेदान्वयानुरोधात् शतृशा(१)नजादीनां कर्त्तरि शक्तिरिति चेत्, न। पचतिकल्पं पचतिरूपं देवदत्त इत्याद्यनुरोधेन तिङ्क्ष्वपि कर्तुरेव वाच्यत्वौचित्यात्।

किञ्च कृतिवाच्यत्वे रथो गच्छतीत्यादौ आश्रये लक्षणास्वीकारे गौरवापत्तिः। अभिहितत्वानभिहितत्वव्यवस्थोच्छेदापत्तिश्च। न च "अन-

---

*नामार्थयोरिति*। इदं च फलितार्थकथनं बोध्यम्। नामार्थयोर्भेदेन साक्षादन्वयोऽव्युत्पन्न इति व्युत्पत्तिस्वरूपम्। इयं च भेदसम्बन्धावच्छिन्ननामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति मुख्यविशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितिः कारणमिति कार्यकारणभावमूलिकेति बोध्यम्।

दूषणान्तरमाह—*किञ्चेति*। *अभिहितेति*। "कर्मणि द्वितीया" "कर्तरि तृतीया" इत्यत्र "अनभिहिते" इत्यधिकारात्—अनुक्ते कर्तरि तृतीया भवति, अनुक्ते कर्मणि च द्वितीया भवति, उक्ते च प्रथमैवेति व्यवस्था कृतौ शक्त्यङ्गीकारे उच्छि

---

(१) भावविहितलकारस्थानिकभिन्नानामिति शेषः। तेन न पूर्वप्रयोगासङ्गतिः

भिहिते" इति सूत्रस्यानभिहितसङ्ख्याके इत्यर्थवर्णनमिति वाच्यम्। कृत्तद्धितसमासैः सङ्ख्याऽभिधानस्याप्रसिद्धत्वात्।

किञ्च यत्नोऽपि व्यापारसामान्यं धातुत एव लभ्यते, स्थालीस्थे यत्ने पचिना कथ्यमाने स्थाली पचतीति "कारके" इत्यधिकारसूत्रे भाष्यप्रयोगादनन्यलभ्यस्यैव शब्दार्थत्वात् कृतौ शक्तेरुक्तिसम्भव एव नेत्यलम्॥

आख्यातार्थे धात्वर्थो विशेषणमित्यस्य निराकरणमवशिष्यते। तथाहि-प्रकृत्यर्थप्रत्ययार्थयोः सहार्थत्वे प्रत्ययार्थस्यैव प्राधान्यमित्युत्सर्गः। पाचक औपगव इत्युदाहरणं पाकक्रियाश्रयः उपगुसम्बन्ध्यभिन्नापत्यमिति प्रत्ययार्थस्य प्राधान्यन्तयोरर्थे। तत्रापि प्रत्ययवाच्यस्यैवार्थस्य प्राधान्यम्। द्योत्यस्य त्वप्राधान्यमेव। यथा अजा इत्यत्र स्त्रीत्वविशिष्टपशुविशेष इति बोधः। तस्योत्सर्गस्य "भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि" इति यास्कवचनमपवादः। तेनाख्याते तिङन्ते क्रियाया एव प्राधान्यं शाब्दबोधेन प्रत्ययार्थस्येति बोध्यम्।

---

द्योतेति भावः।

"कारके" इति सूत्रभाष्यादाख्यातस्य कृतौ शक्तिः कथमपि न सम्भवतीति दर्शयति—*किञ्चेति*। *यत्नोऽपीति*। व्यापारस्यैव फलोत्पादकत्वेन प्रसिद्ध्या पचतीत्यतो विक्लित्यनुकूलव्यापारस्यैव बोधस्यानुभवसिद्धत्वादिति भावः। *भाष्यप्रयोगादिति*। यदा सौकर्यातिशयद्योतनाय कर्तृव्यापारो न विवक्ष्यते, तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्ते, यथा स्थाली पचतीति अत्र सौकर्यातिशयद्योतनाय स्थाल्या अधिकरणत्वेनाविवक्षायां व्यापाराश्रयत्वेन वक्तृतात्पर्यविषयतायां "स्वतन्त्र" इति कर्तृत्वे तत्कर्तरि लकारे स्थाल्याः प्रथमान्तत्वमिति भाष्याशयः। कृतिरूपयत्नस्य आत्मविशेषगुणस्य लकारार्थत्वे तु स्थाल्या अचेतनत्वात् तदाश्रयत्वासम्भवेन तदसङ्गतं स्पष्टमेवेति भावः॥

*प्राधान्यमिति*। अस्यां व्युत्पत्तौ तु प्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधम्प्रति विशेष्यतासंसर्गेण विभक्तिजन्योपस्थितिः कारणमिति कार्यकारणभावो मूलं बोध्यम्। *द्योत्यस्येति*। अजा खट्वा महिषी इत्यत्र स्त्रीप्रत्ययानां द्योतकत्वमेव। अन्यथा स्त्रीप्रत्ययार्थस्त्रीत्वस्यैव प्राधान्यापत्तौ अजा, महिषी इत्यादौ स्त्रीत्वविशिष्टः पशुरिति बोधानुपपत्तिः स्यात्। एतेन द्योत्यभिन्नप्रत्ययार्थः प्रधानमिति सामान्यो नियमः सूचित इति बोध्यम्।

*भावप्रधानमिति*। भावो—धात्वर्थः। धात्वर्थश्च—फलव्यापारान्यतमो बोध्यः। प्रधानम्—विशेष्यमिति यावत्। तथाहि—भावः प्रधानं यस्मिन्निति बहुव्री-

यत्तु आख्यातपदेन तिङ्मात्रग्रहणाद्भावप्रधानमित्यत्र षष्ठीतत्पुरुषाश्रयणात् प्रत्ययार्थप्राधान्यमेव फलतीति। तन्न। "आख्यातमाख्यातेन क्रियासातत्ये" इति सूत्रे आख्यातपदेन तिङन्तस्यैव ग्रहणात्। उत्सर्गेणैव निर्वाहे यास्ककृतापवादवचनवैयर्थ्यापत्तेश्च। तस्मात् "भावप्रधानम्" इत्यत्र बहुव्रीहिः। आख्यातपदेन तिङन्तस्यैव ग्रहणमित्यलम्।

प्रथमान्तार्थमुख्यविशेष्यको बोधस्तार्किकमते इति निराकर्तुमवशिष्यते। तथा हि–शाब्दिकमते पश्य मृगो धावतीत्यादौ मृगकर्तृकं धावनं दृशिक्रियायाः कर्म्म, प्रधानं दृशिक्रियैव। तथा च मृगकर्तृकधावनकर्म्मकं प्रेरणाविषयीभूतं त्वत्कर्तृकं दर्शनमिति बोधः। तत्र मृगो धावतीत्यत्र विशेष्यभूतधावनरूपार्थवाचकस्य धावतीत्यस्य प्रातिपदिकत्वाभावान्न द्वितीया। कर्मत्वन्तु संसर्गमर्यादया भासते। एवं पचति भवतीत्यत्र पचिक्रियाकर्तृका सत्तेति बोधः। पच्यादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्तीति भूवादिसूत्रस्थभाष्यात्। उक्तञ्च हरिणा—

> सुबन्तं हि यथाऽनेकन्तिङन्तस्य विशेषणम्।
> तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम्॥ इति।

---

हिः। आख्यातं तिङन्तमिति यावत्। तेन तिङन्तं फलव्यापारान्यतरप्रधानकं बोधं जनयति। नामानि-प्रातिपदिकानि। सत्वप्रधानानि-सत्वम्—द्रव्यम्। आश्रय इति यावत्। तत्प्रधानानि—तद्विशेष्यकाणि ज्ञानानि, अन्वयबोधात्मकानि जनयन्तीति भावः। यथा—पचति इत्यत्र व्यापारप्रधानको बोधः। पच्यते इत्यत्र फलप्रधानको विक्लित्यादिरूपार्थो बोध्यत इति ज्ञेयम्॥ *षष्ठीति*। भावस्य-आख्यातस्य प्रधानमिति षष्ठीतत्पुरुषादाख्यातपदस्य तिङ्मात्रपरत्वात् प्रत्ययार्थस्यैव प्राधान्यं सिध्यतीति यत्तुकृतप्रश्नस्याशयो बोध्यः। *पश्य मृगो धावतीति*। न च पश्येत्यत्र तमिति कर्माध्याहार्यम्। वाक्यभेदप्रसङ्गात्। उत्कटधावनक्रियाविशेषस्यैव दर्शनकर्मतयाऽन्वयस्य प्रतिपिपादयिषितत्वात्। अध्याहारेऽनन्वयापत्तेश्च। एवं च भावनाप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिः कारणमिति नैयायिकोक्तं नादरणीयम्। किन्तु आख्यातार्थकर्तृप्रकारबोधे धातुजन्योपस्थितिर्भावनात्वावच्छिन्नविषयतया कारणमिति कार्यकारणभावोऽवसेयः। *संसर्गमर्यादयेति*। शाब्दबोधस्थले-'एकपदार्थे अपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते' इति नियमेन एकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसम्बन्धस्याकांक्षाभास्यत्वात्। अत एव 'नीलो घटः' इत्यादावभेदादिबोधः। एवञ्चात्र कर्मत्वबोधे नानुपपत्तिरिति ध्येयम्।

तार्किकमते तु अन्यदेशसंयोगानुकूलधावनानुकूलकृतिमन्मृगकर्मकं प्रेरणाविषयीभूतं यद्दर्शनं तदनुकूलकृतिमांस्त्वमिति बोधः । तत्र विशेष्यभूतार्थवाचकमृगशब्दस्य प्रातिपदिकत्वात् दृशिक्रियाकर्म्मत्वाच्च द्वितीयापत्तौ धावन्तं मृगं पश्येतिवत् पश्य मृगन्धावतीत्यापत्तेः । अप्रथमासमानाधिकरणे शतृशानचोर्नित्यत्वादेवं प्रयोगावल्यापत्तेश्च ॥

ननु विशिष्टार्थवाचकस्य धावति मृग इति वाक्यस्य कर्म्मत्वेऽपि पृथङ् मृग इत्यस्य प्रातिपदिकस्य कर्म्मत्वाभावान्न द्वितीयेति चेत्, न । "अनभिहिते" इत्यधिकारसूत्रप्रघट्टके अभिधानञ्च तिङ्कृत्तद्धितसमासैरित्येतत्परिगणनप्रत्याख्यानपरभाष्यरीत्या द्वितीयाऽऽपत्तेः ।

तथाहि—कटं भीष्मं कुर्वित्यादौ विशेष्यकटशब्दादुत्पन्नद्वितीयया कर्म्मत्वस्योक्तत्वात्विशेषणीभूतभीष्मशब्दाद् द्वितीया न स्यादतः परिगणनं भाष्ये कृतम् । तत्प्रत्याख्यानञ्च सर्वकारकाणां साक्षात्स्वाश्रयद्वारा वा अरुणाधिकरणन्यायेन भावनान्वयस्वीकारात् । अत एवोक्तम्भाष्ये-कटोऽपि कर्म्म भीष्मादयोऽपीति। तत्र कटनिष्ठकर्म्मत्वोक्तावपि भीष्मत्वादिगुणविशिष्टकर्म्मत्वानुक्तेस्तस्माद् द्वितीयेति तात्पर्यम् । उभयोः पश्चात्परस्परमन्वयस्तु विशेष्य विशेषणभावेन । अयमेवान्वयः पार्ष्णिक इत्युच्यते । एवमेवान्वयोऽरुणाधिकरणे-"अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति"इत्यत्र क्रयणक्रियायां मीमांसकैस्स्वीकृतः । तस्माद्धावति मृग इत्यत्र उभयोः कर्म्मत्वे धावतीत्यस्य प्रातिपदिकत्वाभावाद् विशेषणत्वेनान्यत्र निराकाङ्क्षत्वाच्च द्वितीयोत्पत्त्यभावेऽपि मृगशब्दाद् द्वितीया दुर्वारैवेत्यवेहि । शाब्दिकमते तु क्रियाविशेषणत्वेनेतरार्थे निराकाङ्क्षत्वाद् मृगशब्दान्न द्वितीया । तार्किकमते

---

*तार्किकमत इति* । प्रथमान्तार्थस्य प्रधानतावादिमत इत्यर्थः ।

*प्रेरणाविषयीति* । व्यापारानुकूलव्यापारस्यैव प्रेरणारूपत्वमिति यावत् ।

*वाक्यस्येति* । मृगो धावतीति वाक्यस्य कर्म्मवाचकत्वेऽपि तस्य समासग्रहणकृतनियमान्न प्रातिपदिकत्वमिति भावः ॥

*अत एवेति* । सर्वेषां कारकाणां साक्षात् परम्परया वा क्रियान्वयाङ्गीकारादेवेत्यर्थः । *क्रियाविशेषणत्वेनेति* । धावनक्रियायाः मृगपदार्थाभिन्नाश्रयद्वारा विशेषणत्वेनेति भावः । *निराकाङ्क्षत्वादिति* । इतरक्रियाम्प्रति निराकाङ्क्षत्वात् मृगशब्दस्य कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयत्वप्रकारकेच्छोद्देश्यत्वाभावात् कर्मसंज्ञाया

तु विशेष्यार्थवाचकात् मृगशब्दात् राज्ञः पुरुषमानयेतिवद् द्वितीया दुर्वारे-त्यलमतिविस्तरेण । इति धात्वर्थनिर्णयः ।

## अथ निपातार्थनिर्णयः ।

अनुभूयते सुखम्, साक्षात् क्रियते गुरुरित्यादौ निपातानां द्योतकत्वेनानुभवसाक्षात्काररूपफलयोर्धात्वर्थत्वेन सकर्म्मकत्वम् । कर्म्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्म्मकत्वमितिनिष्कृष्टमतेऽपि फलाश्रयतया कर्म्मसंज्ञकस्य धात्वर्थफले एवान्वयौचित्येन द्योतकत्वमावश्यकम् । द्योतकत्वञ्च स्वसमभिव्याहृतपदनिष्ठवृत्त्युद्बोधकत्वम् । क्वचित्तु क्रियाविशेषाक्षेपकत्व द्योतकत्वम् । यथा प्रादेशं विलिखतीत्यादौ वर्तमानक्रियाक्षेपकः । प्रादेशं विमाय लिखतीत्यर्थावगमात् । अत एव "अथ शब्दानुशासनम्" इत्यत्राथशब्दस्य प्रारम्भक्रियाक्षेपकत्वं कैयटाद्युक्तं सङ्गच्छते । क्वचित्तु सम्बन्धपरिच्छेदकत्वं

---

अभावान्न द्वितीयेति तात्पर्यम् । *राज्ञः पुरुषमित्यादि* । राज्ञः पुरुषमानयेत्यत्र यथा विशेष्यपुरुषपदार्थस्य-आनयनक्रियायां साक्षादन्वयेन कर्म्मत्वम्, तथा विशेष्यमृगस्य नैयायिकमते साक्षात् क्रियान्वयित्वेन कर्म्मत्वाद्द्वितीया दुर्वारेति यावत् ॥

इत्यर्थदीपिकायां धात्वर्थविचारः ।

ननु अनुभूयते सुखं साक्षात्क्रियते गुरुरित्यत्र अनुभवाद्यर्थः किं धातोः ? उत उपसर्गस्य ? अथ च उपसर्गविशिष्टधातोः । तत्र नाद्यः भवतीत्यत्रापि तत्प्रत्ययापत्तेः । न च द्वितीयः सम्भवति, 'प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्' इति व्युत्पत्त्या आख्यातार्थेऽनन्वयापत्तेः । नापि विशिष्टार्थः, विशिष्टानुपूर्व्याः शक्ततावच्छेदकत्वे गौरवादित्यभिसन्धायाह—*निपातानां द्योतकत्वेनेति* । *सकर्मकत्वमिति* । एतेन निपातस्यैव तदर्थकत्वमित्यपास्तम् । अत एव—

"द्योतकाः प्रादयो येन निपाताश्चादयस्तथा" इति कारिका सङ्गच्छते ।

*स्वसमभिव्याहृतेति* । भूधातुगतानुभवबोधकशक्तेरुद्बोधकोऽनुरित्यर्थः । लक्षणसमन्वयस्त्वेवं विचारणीयः—स्वं द्योतकत्वेनाभिमतं निपातपदम् अन्वादि तत्समभिव्याहृतधातुनिष्ठानुभवाद्यर्थनिरूपितवृत्त्युद्बोधकत्वं तेषामिति । *क्रियाविशेषेति* । आक्षेपकत्वन्नाम—अन्यथानुपपत्त्या कल्पनाजनकत्वम्बोध्यम् । *प्रादेशमिति* । अत्र कारकविभक्तेर्लिखतीतिक्रियायोग्यताऽभावाद्विना मानक्रियाऽऽक्षिप्यते । क्रियाविशेषाक्षेपकत्वरूपद्योतकत्वे प्रमाणमाह—*अत एवेति* । उक्तद्योतकत्वादेवेत्यर्थः । ननु 'जपमनु प्रावर्षत' इत्यादौ प्रादिनिपाते द्विविधस्यापि द्योतकत्वस्याभावात्पुनरपि निपातानां द्योतकत्वमनुपपन्नमतस्तृतीयमाह—*क्वचित्त्विति* । सम्बन्ध-

द्योतकत्वम् । यथा कर्म्मप्रवचनीयानाम् । विशिष्टस्य न धातुत्वम् । अपाठात् । अडाद्यव्यवस्थापत्तेश्च ।

यत्तु तार्किकाः-उपसर्गाणां द्योतकत्वं तदितरनिपातानां वाचकत्वम्, 'साक्षात्प्रत्यक्षतुल्ययोः' इति कोशात् । नमःपदेन 'देवाय नमः' इत्यादौ नमस्कारार्थस्य, दानावसरे 'गवे नमः' इत्यत्र पूजार्थस्य प्रसिद्धत्वाच्च । सकर्मकत्वञ्च-स्वस्वसमभिव्याहृतनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वम् । कर्म्मत्वञ्च स्वस्वसमभिव्याहृतनिपातान्यतरार्थफलशालित्वमित्याहुः ।

---

विशेषे इत्यर्थः । इदञ्च "कर्मप्रवचनीय" इत्यत्र भाष्ये स्पष्टम् । तत्र हि—"कर्म प्रोक्तवन्तः कर्मप्रवचनीयाः, के पुनस्तथा; ये सम्प्रति क्रियामाहुः । येऽप्रयुज्यमानस्य क्रियामाहुस्ते कर्मप्रवचनीयाः" इत्यन्वर्थसंज्ञात्वमुक्तम् । तत्र हरिः—

क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः ।
नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः ॥

इति, तथाच भाष्ये क्रियापदम् अग्रे तत्सम्बन्धपरमिति भावः । *विशिष्टस्येति* । उपसर्गत्वविशिष्टस्येत्यर्थः । *अपाठादिति* । भ्वादिधातुगणेऽपाठादिति भावः । *अडादीति* । विशिष्टस्य धातुत्वे तत एव लङादेर्विधानेन विशिष्टस्यैवाङ्गसंज्ञायां "लुङ्लङ्लृङ्क्ष्वडुदात्तः" इत्यनेनाडागम उपसर्गात्पूर्वमेव स्यात । किञ्च "लिटि धातोरनभ्यासस्य" इति द्वित्वं निपातविशिष्टधात्ववयवस्य प्रथमैकाचः, क्वचित् द्वितीयैकाचश्च स्यादिति भावः ॥

अत्र नैयायिकाभिप्रायं प्रदर्शयति—*यत्त्वित्यादिना* । *उपसर्गाणां द्योतकत्वमिति* । अत्र तार्किकाणामित्थमनुमानम्-उपसर्गो, द्योतकः, उपसर्गत्वात् । नन्वेवं पक्षतावच्छेदकहेत्वोरैक्ये सिद्धसाधनमिति चेत् ? सत्यम् । संज्ञारूपोपसर्गत्वं पक्षतावच्छेदकम् । द्योतकोपसर्गसजातीयत्वं च हेतुरिति न सिद्धासाधनरूपो दोषः, इति उपसर्गाणां द्योतकत्वसाधने शक्तिसम्बन्धेन निपातपदवत्त्वरूपमखण्डं वा निपातत्वं पक्षतावच्छेदकीकृत्य निपातत्वेनैव हेतुना वाचकत्वाभावसाधनं युक्तम् । प्रमाणानां सामान्ये पक्षपातादिति, तन्न । ततोऽपि सामान्यधर्माव्ययत्वावच्छेदेनैव तत्सिद्ध्यापत्तेः । *प्रत्यक्षतुल्ययोरिति* । अत्र सप्तम्या वाचकत्वार्थकतायां पर्यवसानात् साक्षाच्छब्द एतदुभयार्थवाचक इत्येवं शक्तिग्राहकोऽसौ कोश इति ध्येयम् । ननु निपातानां वाचकत्वे 'साक्षात्क्रियते गुरुः' इत्यादौ कर्मणि लकारा न भवेत् । सकर्म्मकधातोरेव कर्मणि लकारविधानात् । इह तु साक्षात्कारार्थे कृधातोः सकर्म्मकत्वाभावः । सकर्म्मकस्य लक्षणं 'स्वार्थफलव्यधिकरणव्यापारवाचकत्वम्, तद् साक्षात्कारार्थे न भवत इत्यत आह—*सकर्म्मकत्वञ्चेति* ।

तन्न । वैषम्ये बीजाभावात्, अनुभूयते इत्यनेन साक्षात्क्रियते इत्यस्य समत्वात् । नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयाभावात् निपातार्थधात्वर्थयोरन्वयस्यैवासम्भवात् । निपातार्थफलाश्रयत्वेऽपि धात्वर्थान्वयं विना कर्म्मत्वानुपपत्तेश्च ।

यदपि केचिच्छाब्दिकाः—निपातानां वाचकत्वे शोभनः समुच्चय इतिवत् शोभनश्च इत्यापत्तिः । घटस्य समुच्चय इतिवत् घटस्य च इत्यापत्तिश्चेत्याहुः

तन्न । शब्दशक्तिस्वभावेन निपातैः स्वार्थस्य (१) परविशेषणत्वेनैव बोधनेन विशेषणान्वयाप्रसङ्गात् । षष्ठ्यप्राप्तेश्च ।

किञ्च घटं पटञ्च पश्येत्यादौ घटमित्यस्य क्रियायामेवान्वयः । अत एव ततो द्वितीया । घटं समुच्चयवन्तं पटम्पश्येति बोधः । समुच्चयस्य प्रतियोग्या-

---

तार्किकमतं निरस्यति—*तन्नेत्यादिना* । *बीजाभावादिति* । चादित्वेन तेषां वाचकत्वम्, उपसर्गत्वेन द्योतकत्वमिति भेदे प्रमाणाभावादिति भावः ।

*अन्वयस्यैवासम्भवादिति* । साक्षादर्थप्रत्यक्षस्य धात्वर्थव्यापारेण सहान्वयस्याव्युत्पन्नत्वादिति भावः । *धात्वर्थान्वयं विनेति* । व्यापारप्रयोज्यफलाश्रयत्वेनेच्छाविषयस्यैव "कर्तु" रित्यनेन कर्म्मसंज्ञाविधानात् क्रियान्वयं विना कारकत्वस्यैवाभावाच्च प्रकृते कर्म्मसंज्ञा नैव भवेदिति भावः ।

प्राचीनवैय्याकरणाभिप्रायमनुवदति—*यद्पीत्यादिना* । शब्दशक्तीति* । यथा हि एकैव पचिक्रिया पाक इत्यनेन सत्वभूताऽभिधीयते, पचतीत्यनेन चासत्वभूता । एवं शब्दशक्तिस्वभावान्निपातानामपि नित्यपरतन्त्रत्वमेवेति न षष्ठी नापि विशेषणयोग इत्यर्थः । *परविशेषणत्वेनेति* । परपदार्थे विशेषणत्वेनेत्यर्थः । अतः प्रकृतेऽपि विशेषणत्वेनैव भानस्योचितत्वात् । विशेष्यतया भानप्रदर्शनं सर्वथा विरुद्धमेव । तथाहि—यत्किञ्चित्पदार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति नञादिभिन्ननिपातपदजन्योपस्थितेः प्रतिबन्धकत्वमिति प्रतिबध्य प्रतिबन्ध-

---

(१) प्रकारतासम्बन्धेन शाब्दबोधं प्रत्येव चादिनिपातविशेषजन्योपस्थितेः कारणत्वम्, नतु यत्किञ्चिदर्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति कारणत्वम् अतो न शोभनादिपदार्थान्वयस्तत्र । घटो नास्तीत्यादौ नञ्जन्योपस्थितेः विशेष्यतासम्बन्धेन घटप्रकारकशाब्दबोधं प्रत्यपि कारणत्वाङ्गीकारात्–निपातविशेषेति उपात्तम् । सामान्यत एव विशेष्यतासम्बन्धेन किञ्चिदर्थनिष्ठप्रकारताकशाब्दबोधम्प्रति चादिनिपातविशेषजन्योपस्थितेः कारणत्वानङ्गीकारात् प्रतियोगित्वादिसम्बन्धेन घटादिपदार्थस्य समुच्चयादावन्वयसम्भवेन षष्ठ्यापत्तिरपि इत्थमेव वारिता । चशब्दश्चा-

काङ्क्षायां सन्निहितत्वात् घटस्य प्रतियोगित्वम्, पटे तु समुच्चयस्य भेदेनान्वयो; न तु पटस्य समुच्चये इति क्व (१)षष्ठ्यापादनम् । नामार्थयोरभेदान्वय व्युत्पत्तिस्तु निपा (२)तातिरिक्तविषया ।

नि( ३ )पातानामर्थवत्त्वमपि द्यात्यार्थमादायैव । शक्तिलक्षणा—द्योतक-

---

कभावो ज्ञेयः । *भेदेनान्वय इति* । विषयत्वसम्बन्धेनेति बोध्यम् । तथा च घटनिष्ठप्रतियोगितानिरूपकसमुच्चीयविषयताश्रयपटकर्म्मकं दर्शनं त्वत्समवेतं मत्प्रेरणाविषय इति शाब्दबोधः ॥

*षष्ठ्येति* । निपातार्थे विशेषणान्वयासम्भवात् सम्बन्धे एव षष्ठीविधानाच्च । न घटादौ षष्ठ्याः प्राप्तिरिति भावः । *निपातातिरिक्तविषयेति* । वस्तुतोऽव्ययेषु नामत्वमेव नास्ति । "चत्वारि पदजातानि" इति निरुक्ते नामनिपातयोः पृथगुपादानात् । तथा च नामार्थयोरभेदः' इति व्युत्पत्तेर्नायं विषयः । अत एव समुच्चयानन्तरं चादिप्रयोग इति वृद्धाः ।

यद्वा समुच्चितश्चार्थः, स्वभावतश्चाद्युपस्थाप्यस्यासत्वभूतत्वम् । तदुक्तम्—

"समुच्चिताभिधाने च व्यतिरेको न विद्यते" । इति ॥

एवं वाचकत्व तेषां परोक्तदूषणानि संखण्ड्य प्रागुक्तयुक्त्याऽऽवश्यके तेषां द्योतकत्वे सिद्धान्तमादाय परोक्तदूषणद्वयमुद्धरति—*निपातानामिति* ।

---

त्यसमुच्चयस्यासत्त्वभूतत्वात् षष्ठ्यप्राप्तेश्चेति क्वचित्कोऽपपाठः । मातुः स्मरतीत्यादौ असत्त्वभूतक्रियान्वये गृहस्योपरीत्यादौ तादृशाव्ययान्वयेऽपि षष्ठ्या दृष्टत्वात् तेन हेतुना तद्वारणासम्भवादिति बोध्यम् ।

( १ ) अत्र ( घटमित्यस्य क्रियायामेवान्वयः ) इत्यादेः ( क्व षष्ठ्यापादनम् ) इत्यन्तस्य स्थाने ( घटपदस्य घटप्रतियोगिकसमुच्चयवति अप्रसिद्धा शक्तिरेव लक्षणा ) इत्यादिः पाठोऽस्ति, स न युक्तः सन्दर्भविरुद्धत्वात् लघुमञ्जूषाऽसम्मतत्वाच्चेति बोध्यम् ।

( २ ) अतः समुच्चयस्य अनुयोगित्वसम्बन्धेन पटेऽन्वयो नानुपपन्न इति भावः । लिङ्गसङ्ख्यान्वय्यर्थप्रतिपादकत्वमेव नामत्वम् , तच्च निपातेषु नेत्यतोऽपि न तद्व्युत्पत्तिविरोधः । यद्वा समुच्चयवांश्चार्थः । तेन अभेदान्वय समञ्जस एवेत्यादि लघुमञ्जूषायां स्पष्टम् ।

( ३ ) प्राचीनानां वाचकत्वपक्षे शोभनश्चेत्यादिदूषणस्याभिधानमसङ्गतमिति प्रतिपादितम् । इदानीं द्योतकत्वपक्षेऽपि न किञ्चिद् दूषणमिति नैयायिकान् प्रत्युच्यते-निपातानामिति ।

ताऽन्यतमसम्बन्धेन बोधकत्वस्यैवार्थवत्त्वात् । नञ्समासे उत्तरपदार्थप्राधान्यं द्योत्यार्थापेक्षयैव । प्रतिष्ठते इत्यत्र तिष्ठतिरेव गतिवाची, धातूनामनेकार्थत्वात् । प्रशब्दस्तु ( १ )तदर्थगत्यादित्वस्य द्योतकः ।

अत एव धातुः पूर्वं साधनेन युज्यते पश्चादुपसर्गेणेति सिद्धान्तितम् । साधनं कारकम् तत्प्रयुक्तकार्येण, उपसर्गेण उपसर्गसंज्ञकशब्देन । तत्र हि भाष्ये-"पूर्वं धातुरुपसर्गेण युज्यते, पश्चात्साधनेनेति । नैतत्सारं पूर्वं धातुस्साधनेन युज्यते पश्चादुपसर्गेण साधनं हि क्रियां (२)निर्वर्तयति तामुप-

---

*बोधकत्वस्यैवेति* । अर्थविषयकबोजवनकत्वप्रकारकवक्तृतात्पर्यविषयतापर्याप्त्यधिकरणस्यैवेत्यर्थः ॥ *नञ्समासे इति* । नञ्ब्राह्मणो अब्राह्मण इत्यस्यारोपितब्राह्मण इत्यर्थः । आरोपितत्वं नञ्द्योत्यम् । अत एव असर्वस्मै इत्यादौ सर्वनामसंज्ञायां स्मायादेश इति भावः । *द्योतक इति* । अत्र भूवादिसूत्रस्थं भाष्यं प्रमाणम् । तत्र हि "क्रियावचने धातावुपसर्गप्रत्यययोः प्रतिषेधः" इति वार्तिकखण्डनावसरे "प्रकृतिः प्रकृत्यर्थं वर्तते प्रत्ययः प्रत्ययार्थे" इति प्रतिपाद्य, क्रियाविशेषक उपसर्गः, पचतीत्यत्र क्रिया गम्यते, तां प्रो विशिनष्टि" इत्युक्त्वा, तत्र धातोरुपसर्गव्यभिचारवदध्येतीत्यादौ उपसर्गस्य धातुव्यभिचारेण निर्वाहं कृत्वा, "इह तर्हि व्यक्तमर्थान्तरं गम्यते, तिष्ठति प्रतिष्ठते" इति आद्ये व्रजिक्रियानिवृत्तिरन्त्ये व्रजिक्रिया, अतो "मन्यामहे उपसर्गकृतमेतत् येनात्र व्रजिक्रिया गम्यत इति प्रोऽयं दृष्टापचारः आदिकर्मणि वर्तते । न चेदं नास्ति बह्वर्था अपि धातवो भवन्ति" इति । वप्यादौ यथेदं तथाऽत्रापि "तिष्ठतिरेव व्रजिक्रियां तन्निवृत्तिं चाह" इत्युक्तम् । प्रोऽयमिति, अन्यत्रापि प्रयोगात् । ततश्चान्यत्रास्य योऽर्थो द्योत्यः, स एवेहापीत्यनुमीयते । अनेकार्थत्वाद्धातूनां तिष्ठतिरेव गतिवाचीति निर्णय इति कैयटः ।

*पूर्वं धातुरुपसर्गेणेति* । विशिष्टा हि क्रिया 'उपाल्यते गुरुः' इत्यादौ कार्यलाभाय सम्बध्यते । एवाञ्चान्तरङ्गत्वात्सुटि सञ्चस्करतुरित्यत्र गुणः सिद्ध इति भावः । ननु "विष्वग्देवयोश्च" इत्यत्राप्रत्ययग्रहणेन तदादिविधेर्ज्ञापितत्वात्कथं धातूपसर्गकार्यस्यान्तरङ्गत्वमित्यत आह—*नैतत्सारमिति* । साधनसम्भवाद्धि धात्वर्थस्य साध्यत्वं प्रतीयते, क्रियायामेव चोपसर्गो विशेषं द्योतयति । *पश्चादुपसर्गेणेति* । अत एव 'प्रत्ययः' इति निर्देशः सङ्गच्छते । *निर्वर्तयतीति* । साध्यवैशिष्ट्येन

---

( १ ) तदर्थगतेः—स्थाधात्वर्थगतेः आदित्वस्य द्योतक इत्यर्थः । तेन प्रतिष्ठते इत्यस्य गन्तुं प्रवर्तते इत्यर्थो बोध्यः ।

( २ ) निर्वर्तयति साध्यत्ववैशिष्ट्येन बोधयतीत्यर्थः ।

सर्गो विशिनष्टीति(१)। सत्यमेवमेतत्। (२)यस्त्वसौ धातूपसर्गयोरभिसम्बन्धस्तमभ्यन्तरं कृत्वा धातुस्साधनेन युज्यते। अवश्यं चैतदेवं विज्ञेयं यो ह्येवं मन्यते पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति तस्य आस्यते गुरुणा इत्यकर्मकः उपास्यते गुरुरिति केन सकर्मकः स्यात्” इति। हरिणाऽप्युक्तम्—

धातोस्साधनयोगस्य भाविनः प्रक्रमाद्यथा।

बोधयतीत्यर्थः। *सत्यमेवमेतदिति*। उपसर्गयोगात्पूर्वं साधनयोग इति सत्यम्, परन्तु धातूपसर्गसम्बन्धकृता योऽर्थस्तमभ्यन्तरं कृत्वा स्वबोध्यं कृत्वा साधनयोगे क्रियात्वावगतौ उपसर्गयोगः। न हि केवलधातुना सोऽर्थः प्रतीयते। *यस्त्वसाविति*। यस्तव धातूपसर्गसम्बन्धकृतत्वेनाभिमतोऽर्थस्तमुपसर्गसंज्ञकसम्बन्धमन्तरेणापि धातुरभ्यन्तरं कृत्वाऽर्थत्वेनाङ्गीकृत्य साधनेन युज्यत इत्यर्थः।

अत्रेदं तात्पर्यम्—वक्ता धातोरेव विशिष्टमर्थं बुद्धौ कृत्वा साधनसम्बन्धकार्यप्रत्ययोगेन तत्र साध्यत्वावगतौ श्रोतृबोधाय क्रियायोगनिमित्तोपसर्गसंज्ञकशब्दयोगं करोति। अन्यथा केवलधातुतः सर्वत्राप्रतीयमानतया श्रोतुस्तद्बोधो न स्यादिति।

एतदेवोक्तं कैयटेन “भूवादयो धातवः” इति सूत्रे। तथाहि—अनेकार्थत्वाद्धातूनां विशिष्टोऽर्थो धातोरेव, उपसर्गस्तु बोद्धारं प्रति तदर्थद्योतक इति। एवं च पूर्वमुपसर्गेण योगो नाम तदर्थसम्बन्धः, तत उपसर्गयोगात्पूर्वं साधनकार्ययोगः, तत उपसर्गशब्दयोग इति परिभाषाद्वयार्थं इति बोध्यम्। विस्तरस्तु बृहन्मञ्जूषायां स्पष्टम्।

*धातोरिति*। क्रियावाचिनो धातव इत्युक्तम्, साधनसम्बन्धाच्च प्राक् क्रिया-

---

(१) विशिनष्टि स्वद्योत्यविशेषणवैशिष्ट्येन बोधयतीत्यर्थः। साध्यत्वेन ज्ञानं विना क्रियायोगे विहितोपसर्गसंज्ञकशब्दैर्योगाज्ञानादिति “पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण” इत्यस्य तात्पर्यम्।

(२) धातूपसर्गकार्यस्य सुडादेरन्तरङ्गत्वोपपादनायाह—यस्त्वसाविति। यः धातूपसर्गसम्बन्धकृतत्वेनाभिमतोऽर्थः तं धातुः उपसर्गसंज्ञकशब्दयोगं विनाऽपि अभ्यन्तरं कृत्वाऽर्थत्वेनाङ्गीकृत्य साधनेन युज्यते इत्यर्थः। एवं च पूर्वमुपसर्गयोगो नाम तदर्थसम्बन्धः। ततः उपसर्गशब्दयोगात् पूर्वं साधनकार्ययोगः, ततः उपसर्गशब्दयोग इति “पूर्वं धातुः साधनेन युज्यते, पूर्वं धातुरुपसर्गेण युज्यते” इति परिभाषाद्वयस्यापि तात्पर्यम्। एवं च सुटः पूर्वोपस्थितभूषणाद्यर्थनिमित्तकत्वेनान्तरङ्गत्वमुपपन्नम्। यत्तु उपसर्गकार्यं नार्थनिमित्तकं तत्तु पूर्वागतसाधननिमित्तककार्याद् बहिरङ्गमेव। तेन प्रत्ययः अध्ययनम् इत्यादौ यणादिकमेवान्तरङ्गत्वात् भवति। अत एव “णेरध्ययने” इत्यादिनिर्देशसङ्गतिरित्यादिकमन्यतो बोध्यम्।

धातुत्वं कर्म्मभावश्च तथाऽन्यदपि दृश्यताम् ॥
बुद्धिस्थादभिसम्बन्धात्तथा धातूपसर्गयोः।
अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते ॥ इति ।

अस्यार्थः—यथा भाविसाधनसम्बन्धाश्रयणेन क्रियावाचित्वमाश्रित्य धातुसंज्ञोच्यते, यथा च सन्प्रत्यये चिकीर्षिते भावीषिकर्म्मत्वमाश्रित्योपक्रमे एवेषिकर्म्मत्वमुक्तम्, तथा भाव्युपसर्गसम्बन्धादुपक्रमे एव विशिष्टक्रियावाचकत्वं दृश्यताम्। धातूपसर्गयोस्सम्बन्धं बुद्धिविषयीकृत्योपसर्गार्थकृतो विशेषो धातुनैवाभ्यन्तरीकृतः पदप्रयोगकाले उपसर्गसम्बन्धे सति प्रकाशते। श्रोतुरिति शेषः। उपसर्गयोगात्प्रागेव धातुनैवोपसर्गार्थविशिष्टः स्वार्थ उच्यत इति तात्पर्यम्। पूर्वं धातुरुपसर्गेणेति तु तदर्थस्य धात्वर्थान्तर्भावाद् व्यवहारः।

चन्द्र इव मुखमित्यादौ चन्द्रपदस्य स्वसदृशेऽप्रसिद्धा शक्तिरेव लक्षणा। "नञिवयुक्तमन्यसदृशाधिकरणे" इति न्यायात्। इवपदं तात्पर्यग्राहकम्। तात्पर्यग्राहकत्वञ्च—स्वसमभिव्याहृतपदस्यार्थान्तरशक्तिद्योतकत्वमित्यागतम् इवनिपातस्य द्योतकत्वम्।

---

निवृत्तेरसम्भवात् यथा भाविसाधनसम्बन्धाश्रयेणापक्रमे एव धातुसंज्ञा, यथा वा "धातोः कर्मणः" इत्यत्र भावीषिकर्मत्वमुक्तम्, तथाभाविसम्बन्धादुपक्रमे एव विशिष्टक्रियावचनत्वम्, तदाह—*अन्यदपीति*। दार्ष्टान्तिके योजयति—*तथेति*। *भेदः*—विशेषः। *पदकाले*—पदप्रयोगकाले। प्रतिष्ठते इत्यादिप्रयोगकाले इति भावः। 'पूर्वं धातुः साधनेन' इति पक्षेणाह—*प्रयोगार्हेष्विति*। प्रयोगार्हेषु धातुषु प्रसिद्धोऽर्थो विशेष्यो भवत्युपसर्गादिभिः ॥

*श्रोतुरितीति*। तथाहि—

'प्रयोगार्हेषु सिद्धः सन् भेत्तव्योऽर्थो विशेषणैः।
प्राक् तु साधनसम्बन्धात् क्रिया नैवोपजायते। इति च ॥

*स्वसदृशे इति*। स्वप्रतियोगिकसदृशे इत्यर्थः। *नञिवयुक्तमिति*। "नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिः" इति न्यायाकारो बोध्यः। नञ्समभिव्याहृतम् इवसमभिव्याहृतञ्च, पदं स्वबोध्यार्थान्यस्य स्वबोध्यार्थसदृशस्य च बोधकमिति तदर्थः। नञ्पदम्, इवपदञ्च तात्पर्यग्राहकम्, तथाह्यर्थगतिः। सादृश्यञ्च तत्तत्स्थलेषु तत्तद्धर्मेण ग्राह्यम्। स च धर्मः सादृश्यप्रतियोगितावच्छेदकोऽपेक्षितः। चन्द्र इव मुखमित्यादौ आह्लादकत्वधर्म्मस्य सादृश्यप्रतियोगितावच्छेदकचन्द्रत्वव्यापकत्वात् तेनैव धर्म्मेण सादृश्यमवसेयमिति दिक्।

यत्तु इवार्थस्सादृश्यं तत्र प्रतियोग्यनुयोगिभावेनैव चन्द्रमुखयोरन्वयोपपत्तौ किं लक्षणया । तथा च चन्द्रप्रतियोगिकसादृश्याश्रयो मुखमिति बोध इत्याहुः । तन्न । चन्द्र इव मुखं दृश्यते चन्द्रमिव मुखं पश्यामीत्यादौ चन्द्रपदस्य मुखरूपकर्म्मसामानाधिकरण्याभावादुक्तानुक्तत्वप्रयुक्तविभक्त्यनापत्तेः षष्ठ्यापतेश्च ।

परे त्विवशब्दस्योपमानताद्योतकत्वम् । उपमानत्वञ्च–उपमानोपमेयोभयनिष्ठसाधारणधर्म्मवत्त्वेनेषदितरपरिच्छेदकत्वम् । तद्धर्म्मवत्तया परिच्छेद्यत्वञ्चोपमेयत्वम् । साधारणधर्मसम्बन्धश्च क्वचिद् विशेष्यतयाऽन्वेति क्वचिद् विशेषणतया । एवञ्च चन्द्र इव आह्लादकं मुखमित्यादौ आह्लादकोपमानभूतचन्द्राभिन्नमाह्लादकं मुखमिति बोधः। चन्द्र इव मुखमाह्लादयतीत्यादौ चोपमानभूतचन्द्रकर्तृकाह्लादाभिन्नो मुखकर्तृकाह्लाद इति बोधः। इदम् "उपमानानि सामान्यवचनैः" इत्यत्र ( १ ) भाष्ये स्पष्टमित्याहुः ।

---

*प्रतियोगीति* । चन्द्रस्य प्रतियोगितया मुखस्यानुयोगितया च सादृश्येऽन्वयः। चन्द्रप्रतियोगिकमुखानुयोगिकसादृश्यमिति यावत् । एवञ्चात्र लक्षणा न युक्तेति भावः । *कर्म्मसामानाधिकरण्याभावादिति* । अस्माकं मते तु चन्द्रसदृशे लक्षणया चन्द्रसदृशरूपचन्द्रपदार्थस्य स्वाभिन्नमुखद्वारा फलाश्रयत्वात्कर्म्मत्वेन द्वितीयोपपद्यते।

या विशेष्येषु दृश्यन्ते लिङ्गसङ्ख्याविभक्तयः ।
प्रायस्ता एव कर्तव्याः समानार्थे विशेषणे ॥

इत्यभियुक्तोक्तमत्रार्थे मानं ज्ञेयम् । 'निपाता वाचका' इति तव मते तु चन्द्रपदार्थस्येवार्थसादृश्ये प्रतियोगितयैवान्वयो वाच्यः, स च दुरुपपादः । 'नामार्थयोर्मिथो भेदेनान्वयस्याव्युत्पन्नत्वात् ।

ग्रन्थकर्ता स्वमतं प्रकटयति—*परेत्वित्यादिना*। साधारणधर्मवत्वेनेति*। सादृश्यनियामकधर्मवत्वेनेत्यर्थः । *ईषदितरेति* । स्वल्पभेदवदित्यर्थः । *इति बोध इति* । अतोऽत्रापि तयोः समानविभक्तिकतैवेति भावः । एवं 'गज इव गच्छति चैत्र' इत्यादौ बोध्यम् । 'वनं गज इव शूरः समरभूमिं गच्छति' इत्यादौ 'उपमानगजकर्तृकवनगमनाभिन्नं शूरकर्तृकसमरभूमिगमनम्' इति बोधः । अत्र साधारणधर्मरूपगमनस्य विधेयतयोपमाविधेयका धीः । 'व्याघ्र इव यः पुरुषः स गच्छति' इत्यादौ 'उपमानव्याघ्राभिन्नशूरपुरुषकर्तृकं गमनम्' इति धीः । शूरत्वादिसाधारणधर्मस्योद्देश्यतयोपमोद्देश्यिकाऽत्र धारित्यादि बोध्यम् । नन्वत्रैव किम्मानमित्यत आह—*इदमि-

---

( १ ) तत्र हि भाष्ये "किमिहोदाहरणम् । शस्त्री श्यामा । क्व पुनरयं श्यामाश-

नञ् द्विविधः-पर्युदासः प्रसज्यप्रतिषेधश्च । तत्रारोपविषयत्वं नञ्पर्युदासद्योत्यम् । आरोपविषयत्वद्योतकत्वञ्च नञः समभिव्याहृतघटादिपदानामारोपितवृत्तिनिमित्तबोधकत्व तात्पर्यग्राहकत्वम् । प्रवृत्तिनिमित्तं घटत्वब्राह्म

---

ति* । *भाष्ये स्पष्टमिति* । तत्र हि "किं सर्वथा भेदे उपमानोपमेयभाव उत-अभेदे" इति प्रश्ने ? उभयत्रापि साधारणधर्मासम्भवाद्गौरिव गौः, गौरिवाश्व इत्यादौ उपमावाचकेवादेर्नैरर्थक्यापत्तेमुक्त्वा 'यत्र विशेषरूपेण भेदावगतिः साधारणधर्मरूपेणाभेदावगतिस्तत्र सः" इत्युक्त्वा "कथमेतज्ज्ञातम्" इति शङ्कायां हीनं मानमुपमानं यत्रात्यन्ताय मिमीते इत्यर्थकोपमानव्यवहारादेतन्निर्णीतम् । इत्युक्तम् । तस्यायम्भावः-प्रस्थादि हि साकल्येन मानमिति तद्-अत्यन्तभेदेनैव परिच्छेदकम् । प्रस्थः परिमाणमस्येति प्रस्थो व्रीहिरिति वा इदं तु हीनमिति भेदाभेदाभ्यामेव परिच्छेदकमिति । अत्यन्तायेत्यव्ययमत्यन्तमित्यर्थं इति ।

नञो भेदकत्वमिति तार्किकमतनिरासायोपक्रमते—*नञो द्विविध इति* । नञर्थो द्विविधः । भेदः संसर्गाभावश्च तत्र समासघटकस्य नञो भेदबोधकत्वमितरस्य तु संसर्गाभावबोधकत्वम् । अघटं पश्यतीत्यत्र घटभिन्नम्पश्यति । घटो नास्तीत्यत्र घटत्वावच्छिन्नप्रतियोगिताभाव इति च तार्किकाणां मतमवसेयम् । *पर्युदास इति* ।

'द्वौ नञौ समाख्यातौ पर्युदासप्रसज्यकौ ।
पर्युदाससदृशग्राही प्रसज्यस्तु निषेधकृत्' ॥ इति ।

*आरोपविषयत्वेति* । अत एव 'आरोपितत्वं नञ्द्योत्यं ह्यसोऽव्ययतिसर्ववत्' इत्युक्तिः सङ्गच्छते । *तात्पर्यग्राहकत्वमिति* । यथा-'सिंहो माणवकः' इत्यादौ माणवकादिपदानि सिंहादिपदस्यारोपितसिंहत्वबद्बोधकत्वे । 'अनुदरा कन्या' इत्यादावत्यल्पत्वेनोदराभावमारोप्य नञ्समभिव्याहारे आरोपितोदरबुद्ध्या तन्मूलाल्पत्वादौ विश्रमः । अद्विजः इत्यादौ च तद्भेदमूलकमारोपितप्रवृत्तिनिमित्तकत्वमिति भेदे विश्रान्तिः।। अधर्मं इत्यादौ च विरोधिनि । आरोपितस्य नञ्वाच्यत्वे तु तस्य ब्राह्मणादिपदशक्येऽनारोपितब्राह्मण्यवति सम्बन्धो दुरुपपादः । तत्र प्रसिद्धार्थपरित्यागोऽप्रसिद्धार्थपरिग्रहश्चेत्युभयं द्योतकक्रृत्यमिति नञ्सूत्रे भाष्ये स्पष्टम् ।

*प्रवृत्तिनिमित्तमिति* । प्रातिपदिकविशिष्टत्वं प्रवृत्तिनिमित्तम् । वैशिष्ट्यञ्च—

---

ब्दो वर्तते । शस्त्र्यामित्याह । केन तर्हीदानीं देवदत्तोऽभिधीयते । समासेन । (यदि श्यामाशब्देन शस्त्री अभिधीयते उपमेयं समासेन अभिधीयते तर्हि पुंस्त्वविशिष्टदेवदत्तादेरपि उपमेयत्वे श्यामशब्दस्य तदनभिधायकत्वात् स्त्रीत्वविशिष्टशस्त्र्यभिधायकत्वाच्च टापि), शस्त्रीश्यामो देवदत्त इति पुल्लिङ्गप्रयोगो नासिध्यति। "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वत्वं भविष्यति। यद्येवं कुम्भकपाललोहिनी इत्यत्र "वर्णादनुदात्तात्" इति अनुपसर्जनलक्षण ईकारो न प्राप्नोति, एवं तर्हि शस्त्र्यामेव शस्त्रीशब्दो देवदत्तायां

णत्वादौ । तस्मात् अब्राह्मण इत्यादौ आरोपितब्राह्मणत्ववान् क्षत्रियादिरिति

---

स्ववाच्यत्वम् , स्ववाच्यवृत्तित्वं, स्ववाच्योपस्थितिप्रकारतावत्व, स्वनिष्ठशक्तिज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधीयपदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यत्वासमानाधिकरणापदार्थसम्बन्धावच्छिन्नप्रकारताविशिष्टसम्बन्धैः । सम्बन्धघटकवैशिष्ट्यञ्च-स्वानाश्रयत्व, स्वावच्छेदकतानाश्रयत्व, एतदन्यतरसम्बन्धेन । लक्षणसमन्वयस्तु स्वयमेवोह्यः । *अब्राह्मण इति* । अब्राह्मण इत्यत्र आरोपविषयत्वं नञर्थः । तस्य च

---

श्यामाशब्दः । एवमपि समानाधिकरणेनेति वर्तते, व्यधिकरणत्वात्समासो न प्राप्नोति । किं हि वचनान्न भवति । यद्यपि तावद्वचनात्समासः स्यात् । इह खलु मृगीव चपला-मृगचपलेत्यत्र समानाधिकरणलक्षणः पुँवद्भावो न प्राप्नोति । एवं तर्हि तस्यामेवोभयं वर्तते । युक्तं चैतत् ? इतरथाहि बह्वपेक्ष्यं स्यात् । यदि तावत् एवं विग्रहः करिष्यते शस्त्रीव श्यामा देवदत्तेति, शस्त्र्यां श्यामेत्येतदपेक्ष्यं स्यात् । अथाप्येवं विग्रहः करिष्यते, यथाशस्त्री श्यामा। तद्वदियं देवदत्तेति, एवमपि देवदत्तायां श्यामेत्येतदपेक्ष्यं स्यात्" इत्युक्तम् । तत्र तस्यामेवेत्यस्य उपमेयायामेवेत्यर्थः । उपमानशब्दोऽपि सादृश्यमूलकाभेदाध्यवसायात् उपमेये एव वर्तते इति भाष्याशयः। सादृश्यनिर्वाहाय च तत्प्रयोजकस्य साधारणधर्मस्य श्यामत्वादेः घनश्यामो देवदत्त इत्यादौ तन्त्रादिना उपमाऽपमेये चोभयत्रान्वयः । तथाच उपमानश्यामघनाभिन्नः श्यामो देवदत्त इति बोधः । अत एव सूत्रे "सामान्यवचनैः" इति वचनपदमुपात्तम् । तेन च साधारणधर्मत्वेन बोधकता लभ्यते । साधारणधर्मत्वं च अनेकवृत्तिधर्मत्वम् । उभयत्र श्यामत्वादेरन्वयाभावे च अनेकवृत्तिधर्मत्वेन श्यामादिपदानां तद्बोधकत्वाभावात्समासो न स्यात्। तस्मात् सौत्रवचनपदस्वारस्येन उभयगतगुणावाचकत्वादिति "उपमानानि" इतिसूत्रस्थ भाष्याच्च उभयत्र साधारणधर्मान्वयः शाब्दः । तत्प्रयोज्यः सादृश्यान्वयस्तु आर्थः । ननु पूर्वपदस्य घनशब्दादेः लक्षणया तत्सदृशान्वयबोधः शाब्दः । तथासति उपमानत्वेन बोधकानि सामान्यधर्मविशिष्टोपमेयवचनैः समानाधिकरणैः समस्यन्ते इत्यर्थकेन "उपमानानि सामान्यवचनैः" इत्यनेन।समासानापत्तेः । पूर्वपदस्य लक्षणया उपमेयपरत्वेन उपमानवाचकत्वाभावात्। वृत्तिविग्रहयोः समानार्थत्वाय तद्विग्रहवाक्येऽपि घन इव श्याम इत्यादौ लक्षणया तत्सदृशपरत्वस्यावश्यकत्वेन विग्रहवाक्यीयमुपमानवाचकत्वमपि नाश्रयितुं शक्यते । घनेन तुल्य इत्यादिकं तु न तद्विग्रहवाक्यम् । अन्यथा मृग्या तुल्या चपलेत्येतद्विग्रहवाक्यके मृगचपलेत्यत्र पुंवद्भावानापत्तिः । सामानाधिकरण्याभावात् । षष्ठीतत्पुरुषादावतिव्याप्तिवारणाय वृत्तौ विग्रहे च सामानाधिकरण्यस्य पुंवद्भावेऽपेक्षितत्वात्। वृत्तिविग्रहयोः समानार्थकत्वनियमभङ्गापत्तिश्च । तस्मात् "तस्यामेवोभयं वर्तते" इति भाष्यस्य पूर्वपदस्य उपमानवाचकत्वेऽपि साह-

बोधः। अत एवोत्तरपदार्थप्राधान्यं नञ्तत्पुरुषस्येति प्रवादस्सङ्गच्छते। अत एव च 'अतस्मै ब्राह्मणाय' 'असः शिव' इत्यादौ सर्वनामकार्य्यम्। अन्यथा गौणत्वान्न स्यात्। प्रवृत्तिनिमित्तारोपस्तु सदृशे एव भवतीति "पर्य्युदासः सदृशग्राही" इति प्रवादः। पर्य्युदासे निषेधस्स्वार्थः। अन्यस्मिन्नन्यधर्मारोपस्तु आहार्य्यज्ञानरूपः। बाधकालिकमिच्छाजन्यं ज्ञानमेवाहार्य्यं मति वृद्धाः। सादृश्यादयस्तु प्रयोगोपाधयः, पर्य्युदासे स्वार्थिकार्थाः। तदुक्तं हरिणा—

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः॥ इति।

तत्सादृश्यं गर्दभेऽनश्वोऽयमित्यादौ। अभावस्तु प्रसज्यप्रतिषेधे वक्ष्यते। तदन्यत्वम् अमनुष्यं प्राणिनमानयेत्यादौ तदल्पत्वम् अनुदरा कन्या इत्यत्र, अर्थात्स्थूलत्वनिषेधेनोदरस्यालपत्वं गम्यते। अप्राशस्त्यं ब्राह्मणे अब्राह्मणोऽयमिति प्रयोगे। विरोधः असुरः अधर्म इति प्रयोगे।

---

उत्तरपदार्थे ब्राह्मणेऽन्वयः। आरोपश्च प्रत्यासत्या प्रवृत्तिनिवृत्तिप्रकारक एव गृह्यते। एवं च आरोपविषयत्ववान् ब्राह्मण इति बोधः पर्यवसन्न इति बोध्यम्। *अत एवेति*। नञ आरोपितार्थद्योतकत्वादेव। *न स्यादिति*। नञर्थस्य भिन्नार्थवाचकत्वे तस्य च विशेष्यत्वात् इतरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकताप्रयोजकत्वरूपगौणत्वं तच्छब्दादीनां स्यात्। तेन सर्वनामसंज्ञाकार्यं न भवेदिति तात्पर्यम्। *बाधकालिकमिति*। यथा घटे पटत्वं नास्तीति निश्चयदशायामपीच्छयायं पट इति यज्ज्ञानं तदाहार्यम्। तार्किकास्तु अयमेव भ्रम इति मन्यन्ते। तेषां मते तद्धर्माभाववन्निष्ठविशेष्यतानिरूपिततद्धर्मनिष्ठप्रकारतानिरूपकज्ञानस्यैव भ्रमत्वम्।

क्रमेणोदाहरति—*तत्सादृश्यमित्यादिना*। *गर्दभ इति*। अनश्व इत्यस्यारोपिताश्वत्ववानित्यर्थः। अत्र सादृश्यमूलकोऽश्वत्वारोपः। *अमनुष्यमिति*। मनुष्यभिन्नमित्यर्थः। *अनुदरेति* अनु—अल्पमुदरं यस्या इति बहुव्रीहिः। अल्पोदरविशिष्टेत्यर्थः। *अब्राह्मण इति*। अप्रशस्तो ब्राह्मणः, निषिद्ध ब्राह्मण इति यावत्। *असुर इति*। सुरविरुद्ध इत्यर्थः। विरोधश्चात्र क्रूरक्रियात्वेन ज्ञेयः।

---

श्यमूलकाभेदाध्यवसायात् उपमेयपरत्वमित्येव पूर्वोक्तं तात्पर्यं समीचीनम्। ततश्च विग्रहे वृत्तौ च पूर्वपदस्य उपमानत्वविशिष्टार्थपरत्वात् उत्तरपदार्थसाधारणधर्मस्य च उभयत्रान्वयात् समासः, वृत्तिविग्रहयोः समानार्थकत्वं, साधारणधर्मान्वयप्रयोज्याभेदान्वयबोधश्च सिध्यन्ति। ततश्च मूले प्रदर्शितो बोधः उक्तसूत्रस्थभाष्यसम्मत इति सङ्क्षेप इति लघुमञ्जूषायां विस्तरः।

पर्य्युदासस्तु स्वसमभिव्याहृतपदेन सामर्थ्यात्समस्त एव (प्रायः १)। क्वचित्तु "यजतिषु ये यजामहं करोति नानुयाजेषु" इत्यादौ घटःअपटो भवतीत्यर्थके घटो न पट इत्यादौ च समासविकल्पादसमासेऽपि। अत्रान्योन्याभावः फलितो भवति। प्रसज्यप्रतिषेधस्तु समस्तोऽसमस्तश्चेति द्विविधः। तत्र विशेष्यतया क्रियान्वयनियमात्सुबन्तेनासामर्थ्येऽपि 'असूर्यललाटयोः' इत्यादिज्ञापकात्समासः। तदुक्तम्—

प्रसज्यप्रयिषेधोऽयं क्रियया सह यत्र नञ्। इति।

अत्र क्रियापदं गुणस्याप्युपलक्षणमिति वहवः। अत एव नञ्सूत्रे भाष्ये "प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं कुरुत" इत्युक्तम्। उदाहरणम्—नास्माकमेकं प्रियमिति। एकप्रियप्रतिषेधे बहुप्रियप्रतीतिः। एवं 'न सन्देहः, नोपलब्धिः' इत्याद्युदाहरणं गुणस्य। सन्देहादीनां गुणत्वात्। क्रियोदाहरणम्-'अनचि च' 'गेहे घटो नास्ति' इत्यादि। तस्य समस्तस्य तु अत्यन्ताभाव एवार्थः। असमस्तस्य तु अत्यन्ताभावोऽन्योन्याभावश्च। तादात्म्येतरसम्बन्धाभावोऽत्यन्ताभावः। तादात्म्यसम्बन्धाभावोऽन्योन्याभावो भेद इत्यर्थः। असूर्य्यम्पश्या राजदाराः, गेहे घटो नास्ति, घटो न पटः इत्युदाहरणानि। प्रागभावप्रध्वंसाभावौ तु न नञ्द्योत्यौ।

---

पर्युदासं निरूप्य प्रसज्यप्रतिषेधस्वरूपं प्रदर्शयति—*प्रसज्यप्रतिषेधस्त्वित्यादिना*। प्रतिषेधशब्दः कर्मघञन्तो बाहुलकात्। प्रसज्य—आपाद्य प्रतिषेधः प्रतियोगी यस्य तादृशोऽभावोऽर्थो यस्येति व्युत्पत्त्या ऽभावार्थकः। "नञ्" सूत्रे भाष्ये तु "प्रसज्य क्रियागुणौ ततः पश्चान्निवृत्तिं करोति" इत्युक्तम्। तेन गुणाभावबोधेऽपि प्रसज्यप्रतिषेध इति लभ्यते। *बहुप्रिय इति*। प्रियशब्दः पात्रादिः। बहुप्रियतेति पाठस्तु सुगम एव। प्रागुक्तदार्ढ्यायोदाहरणान्तरमाह—*न सन्देह इति*। *"अनचि च" इति*। अत्र विध्यर्थकः। तथाच—अजव्यवहितपूर्वत्वविशिष्टस्य यरो द्वित्वं वेत्येकं वाक्यम्। निषेधवाक्यञ्च-अनचीति। अस्यार्थः-अजव्यवहितपूर्वत्वविशिष्टस्य यरो द्वित्वं न भवतीति। नञःप्रसज्यप्रतिषेधार्थकत्वादिति बोध्यम्। अत्यन्ताभावोदाहरणम्—*असूर्यपश्येति*। सूर्यकर्मकदर्शनप्रतियोगिकाभाववन्तो राजदारा इत्यर्थः। *गेहे घट इति*। घटकर्तृकसत्ताभावो गृहवृत्तिरिति शाब्दबोधः। *न नञ्द्यो-

---

(१) एतन्मध्यस्थः पाठो बहुषु पुस्तकेषु नास्ति।

तत्रात्यन्ताभावो विशेष्यतया तिङन्तार्थक्रियान्वय्येव। (१)नञर्थात्यन्ताभावविशेष्यकबोधे तिङ्समभिव्याहृतधातुजन्योपस्थितेः कारणत्वात्। तथा च घटो नास्तीत्यादौ घटकर्तृकसत्ताप्रतियोगिकोऽभाव इति बोधः। अत एवाहं नास्मि त्वं नासीत्यादौ घटौ न स्तो घटा न सन्तीत्यादौ च पुरुषवचनव्यवस्थोपपद्यते। अन्यथा युष्मदादेस्तिङ्सामानाधिकरण्याभावात् मद्भावोऽस्तीत्यादाविव सा न स्यात्। असंदेह इत्यादौ तु आरोपितार्थकनञैव समासः। अत्यन्ताभावस्तु फलित एव। वायौ रूपं नास्तीत्यत्र तु (२)तात्पर्यानुपपत्त्या रूपप्रतियोगिकात्यन्ताभावे लक्षणा। तेन वाय्वधिकरणिका रूपाभवकर्तृका सत्तेति बोधः। वस्तुतस्तु समनियताभावैक्यमाश्रित्य (३)फलि-

स्याविति*। 'रक्तघटे श्यामो नास्ति' इतिप्रतीतिरत्यन्ताभावमेवावगाहते, न ध्वंसप्रागभावाविति तत्र रहस्यम्।

*तिङन्तार्थेति*। तिङन्तपदमत्र कृदन्तस्याप्युपलक्षणम्बोध्यम्। तेन 'असूर्यम्पश्या राजदारा' इत्यत्र न दोष इति भावः। *धातुजन्योपस्थितेरिति*। प्रकारतासम्बन्धेन नञर्थात्यन्ताभावविशेष्यकशाब्दबुद्धित्वावच्छिन्नम्प्रति विशेष्यतासम्बन्धेन धातुजन्योपस्थितिः कारणमिति कार्यकारणभावोऽत्रावसेयः। *लक्षणेति*। रूपपदस्य रूपप्रतियोगिकात्यन्ताभावे लक्षणा। नञ्पदं तात्पर्यग्राहकमिति भावः। रूपकर्तृकसत्ताभावोऽत्र बोध्यः। रूपाभावस्तु फलितार्थकथनम्।

*समनियतेति*। स्वाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वे सति स्वाभाववद्वृत्ति-

---

( १ ) प्रकारतासम्बन्धेनेति शेषः। कारणतावच्छेदकश्च विशेष्यतासम्बन्धो बोध्यः। एतादृशकार्यकारणभावाङ्गीकारेणैव घटो न जायते इत्यादौ घटोत्पत्त्यभावादिः प्रतीयते, न तु तदभावोत्पत्त्यादिः। एवं च अनुगतरूपेण कार्यकारणभावकल्पने लाघवात् सर्वत्रैव तथा बोधोऽङ्गीकार्यः।

न क्रोधो नच मात्सर्यं न लोभो नाशुभा मतिः।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे॥

इत्यत्र तु प्रत्येकं भवतीत्यस्य, भवन्तीत्यत्र च एतेनेत्यस्याध्याहारेण अन्वय उपपादनीयः। एवमन्यत्रापि बोध्यम्।

( २ ) रूपाभावस्यैव बोधविषयत्वेन तात्पर्यविषयत्वादिति भावः।

( ३ ) रूपसत्ताऽभावविषयके शाब्दबोधे जाते तत्समनियतो रूपाभावोऽर्थादेव प्रतीयत इति भावः।

तार्थ एवायम् । (१)अरूपमस्तीत्यर्थकं वा तत् । एतेनात्यन्ताभावप्रकारक-क्रियाविशेष्यको बोध इति तार्किकोक्तमपास्तम् ॥

नन्वेवं घटसत्तारूपोऽर्थः प्रथमं बुद्धो नञा निवर्तयितुमशक्यः, सतो निषेधायोगात्, *असतस्त्वसत्त्वादेव निवृत्तिसिद्ध्या निषेधो व्यर्थः । तदुक्तम्—

सतां च न निषेधोऽस्ति सोऽसत्सु च न विद्यते ।
जगत्यनेन न्यायेन नञर्थः प्रलयं गतः ॥

इति चेत्, न । बौद्धो हि शब्दो वाचकः बौद्ध एवार्थो वाच्य इत्युक्तत्वात् बुद्धिसतोऽप्यर्थस्य नञा बाह्यसत्तानिषेधात् । बुद्धौ सन्नपि घटो बहिर्नास्तीत्यर्थात् । न च घटास्तिपदाभ्यां या घटविषयाऽस्तिबुद्धिर्जाता सा नञा निवर्त्यते किं बौद्धार्थस्वीकारेणेति वाच्यम् । बुद्धेरशब्दावाच्यत्वेन नञा तन्निषेधायोगात् । एतेन बौद्धार्थमस्वीकुर्वन्तो नञर्थबोधाय कष्टकल्पनां कुर्वन्तस्तार्किकाः परास्ताः । घटो न पट इत्यत्र घटपदस्य घटप्रतियोगिकभेदाश्रये अप्रसिद्धा शक्तिरेव लक्षणा, नञ्पदं तात्पर्यग्राहकम् । तात्पर्यग्राहकत्वं द्योतकत्वमेवेत्युक्तम् । अत एवान्योन्याभावबोधे प्रतियोग्यनुयोगिपदयोः समानविभक्तिकत्वं नियामकमिति वृद्धोक्तं सङ्गच्छते ।

---

त्वं समनियतस्य लक्षणम् । *सतो निषेधायोगादिति* । "नासतो विद्यते भावः, नाभावो विद्यते सतः" इत्यनुसारिसत्कार्यवादिमतमवलम्ब्य उक्तमिति बोध्यम् । *इत्युक्तत्वादिति* । अत एव "एष वन्ध्या सुतो याति खपुष्पकृतशेखरः" इत्यादीनां निषेध उपपद्यते । तेषां प्रातिपदिकत्वञ्च सिद्ध्यतीति बोध्यम् । बौद्धपदार्थस्य स्पष्टीकरणं तु लघुमञ्जूषायां स्पष्टम् । *बुद्धौ सन्नपीति* । विषयतासम्बन्धेन तत्र विद्यमानोऽपीत्यर्थः । *परास्ता इति* । कथमन्यथा शशशृङ्गादिपदानां प्रातिपदिकसंज्ञा स्यात् । बाह्यपदार्थाभावेनार्थवत्त्वाभावात्, इत्यपि ते एव प्रष्टव्याः ।

*घटप्रतियोगिकेति* । अन्यथा तन्मते नञो भेदवाचकतया घटस्य प्रतियोगितया भेदे, तस्य च आश्रयतया पटेऽन्वये घटपदस्य तिङ्सामानाधिकरण्याभावात्प्रथमानापत्तिरिति बोध्यम् । *अत एव*—लक्षणाङ्गीकारादेव । *समानविभक्तिकत्वमिति* ।

---

(१) अब्राह्मण इत्यादाविव आरोपितरूपत्ववान् यो वायुवृत्तिस्तत्कर्तृका सत्तेत्येव शाब्दबोधः । तदभावबोधश्चात्रापि आर्थ एवेति बोध्यम् ।

यत्तु घटपदं पटप्रतियोगिके लाक्षणिकं नञ्पदं तु भेदवति, अतो घटप्रतियोगिकभेदवान्पट इति बोध इति तार्किकैरुक्तम् । तन्न । भेदवति नञर्थे भेदस्यैकदेशत्वात् तत्र घटार्थानन्वयापत्तेः । 'पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन' इति न्यायात् । पदद्वये लक्षणास्वीकारे गौरवाच्च । भाष्यमते लक्षणाया निपातानां वाचकत्वस्य च स्वीकाराभावादिति संक्षेपः ।

एवशब्दस्यार्थोऽवधारणमसम्भवश्च । 'एवे चानियोगे' इति वार्तिके नियोगोऽवधारणं तदभावोऽसम्भव इति कैयटोक्तेः । अनयोरर्थयोरेवशब्दो

---

समानविभक्तिकत्वन्नाम-एकविभक्तिकत्वम् । तत्वञ्च-स्वाव्यवहितोत्तरत्वेनाधिगम्यमानविभक्तिवृत्ति विभक्तिविभाजकधर्मवद्विभक्त्यव्यवहितपूर्वत्वेनाधिगम्यत्वम्। तत्र विभक्तिविशिष्टत्वञ्विभक्तिविभाजकत्वम् । वै० स्वव्याप्यत्वम् , स्वव्याप्याव्याप्यत्वम् , स्वभिन्नत्वम् । एतत्त्रितयसम्बन्धेन, तादृशः प्रथमत्वादिरेव धर्मो; न तु सुप्त्वमौत्वादिकम्वा । तस्य विभक्तित्वव्याप्यप्रथमात्वव्याप्यत्वात् । स्वभिन्नत्वाभावात विभक्तित्वमपि न तथेति लक्षणसमन्वयो बोध्यः ।

*घटप्रतियोगिकभेदवानिति*। घटप्रतियोगिकस्य घटपदार्थस्य नञर्थकदेशे भेदेऽभेदेनान्वय इति तात्पर्यम् । *पदार्थः पदार्थेनेति* । अयं च कार्यकारणभावमूलको न्यायः । नञर्थातिरिक्तत्वेन न्याये सङ्कोचे तु गौरवमिति बोध्यम् । ननु नित्यसाकाङ्क्षितस्थले नायं नायः स्वीकार्यः। अत एव 'देवदत्तस्य गुरुकुलम्' इत्यादौ एकादेशेऽपि न क्षतिः । तथा च प्रकृतेऽपि नित्यसाकाङ्क्षत्वादेकादेशान्वयो न दोषावह इत्यरुचेराह—*पदद्वये इति* ।

*वाचकत्वस्येति* । शास्त्रेषु तावत् निपातार्थविषये पक्षत्रयं दृश्यते । यथा—'प्रजयति' इत्यादौ प्रकर्षादीनां निपातार्थानां केवलधातुतोऽप्रतीत्या उपसर्गसम्बन्धात्तदवगम इति उपसर्गाणां विशेषार्थद्योतकत्वमेवेति प्रशब्दः प्रकृष्टजयद्योतकः । अत्र हरिकारिका—

'क्वचित्सम्भविनो भेदाः केवलैरनिदर्शिताः । उपसर्गेण सम्बन्धे व्यज्यते प्रपरादिना ॥

इतिप्रथमः । क्वचित् उपसर्गाणां वाचकत्वमपि । यथा—'प्रतिष्ठते' इत्यादौ स्थाधातोर्गतिनिवृत्तिवाचकत्वम् , प्रशब्दस्य तु गतिवाचकत्वम् ।

'स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वा' ।

इति यथा । इति द्वितीयःपक्षः ।

तृतीयस्तु सम्भूय धातूपसर्गौ अर्थमाहतुः, उपसर्गस्तु शक्तिमात्रं कुरुते इत्यर्थाभिधाने उपसर्गाः सहकारिणः । वाक्यपदीये उक्तञ्च—

शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते । इति ।

द्योतकः। अत एव तं विनापि तदर्थप्रतीतिः 'सर्वं वाक्यं सावधारणम्' इति वृद्धोक्तं सङ्गच्छते। लवणमेवासौ भुङ्क्ते इत्यादौ प्राचुर्यार्थकस्य, घट एव प्रसिद्ध इत्यादावप्यर्थकस्य, केव भोक्ष्यसे इत्यादावसम्भवार्थकस्य च तस्य सत्त्वमित्यालङ्कारिकाः।

तच्चावधारणं त्रिविधम्। विशेष्यसङ्गतैवकारेऽन्ययोगव्यवच्छेदरूपं, विशेषणसङ्गतैवकारेऽयोगव्यवच्छेदरूपं, क्रियासङ्गतैवकारेऽत्यन्तायोगव्यवच्छेदरूपम्। विशेष्ये-पार्थ एव धनुर्धरः। पार्थेतरावृत्तियद्धनुर्धरत्वं तादृशधनुर्धरत्ववान् पार्थ इति बोधः इत्यन्यतरस्मिन्धनुर्धरत्वसम्बन्धव्यवच्छेदः। विशेषणे, शङ्खः पाण्डुर एव। अयोगः सम्बन्धाभावः तस्य व्यवच्छेदो निवृ-

---

उक्तेष्वपि पक्षत्रयेषु उपसर्गाणां द्योतकत्वमेवेति विचारावसरे निश्प्रचम्। धातूनामनेकार्थत्वात् 'प्रतिष्ठते' इत्यादौ स्थाधातोरेव गतिरर्थः, प्रशब्दो द्योतत एवेति बोध्यम्। एतदेवोक्तं वाक्यपदीये—

स्थादिभिः केवलैर्यच्च गमनादिर्न गम्यते।
तत्रानुमानाद्विविधात् तद्धर्मा प्रादिरुच्यते॥ इति॥

एवं चादिनिपातेष्वपि पक्षत्रयमस्ति। उक्तञ्च हरिणा—

निपाता द्योतकाः केचित् पृथगर्थाभिधायिनः।
आगमा इव केऽपि स्युःसम्भूयार्थस्य वाचकाः॥ इति।

एतेषु पक्षत्रयेषु द्योतकत्वपक्ष एव न्याय्यः। केवलानां चादीनामप्रयोगात् तदुक्तं वाक्यपदीये—

चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः।
प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते।

एवञ्च प्रादीनां चादीनाञ्च निपातानां द्योतकत्वमेवेति हरीणां हार्दम्। नागेशानामपीदमेवारुचिकरम्। प्रकृतसन्दर्भे पुनःपुनःद्योतकत्वपक्षस्यैव समर्थनादितिदिक्।

*असम्भवार्थकस्येति*। तथाच—"एवेचानियोगे" इति वार्तिकमुपादाय तत्रभवान् भाष्यकारआह—

"अनवक्लृप्तौ यदा दृष्टः पररूपस्य गोचरः।
एवस्तु विषयो वृद्धेर्नियमेऽयं यदा भवेत्" ॥ इति॥

तत्र वार्तिके नियोगशब्दो न व्यापारवचनः, तवैव ममैवेत्यादावपि पररूपापत्तेः। स्पष्टञ्चैतत् प्रौढमनोरमायाम्।

*पार्थेतरेति*। पार्थत्वावच्छिन्नप्रतियोगितानिरूपकभेदाश्रयवृत्तित्वाभाववद्ध-

तिः, द्वाभ्यां निषेधाभ्यां प्रकृतार्थदार्ढ्यं बोधनेनाव्यभिचरितपाण्डुरत्वगुणवान् शङ्ख इति बोध इत्ययोगव्यवच्छेदः । न तु नील इति हि फलति । क्रियायां, नीलं सरोजं भवत्येव । अत्यन्तोऽतिशयितोऽयोगः सम्बन्धाभावस्तस्य व्यवच्छेदोऽभावः । तथा च कदाचिन्नीलत्वगुणवदभिन्नं यत्सरोजं तत्कर्तृका सत्तेति बोधः । कदाचिदन्यादृशगुणसंयुक्तमित्यपि गम्यते इत्यत्यन्तायोगव्यवच्छेदः । क्वचिदेवशब्दं विनापि नियमप्रतीतिः । तदुक्तं भाष्ये—अभक्ष्यो ग्राम्य कुक्कुट इत्युक्ते गम्यते एतत् आरण्यो भक्ष्य इति । 'सर्वं वाक्यं सावधारणम्' इति न्यायात् । आलङ्कारिका अपि परिसङ्ख्याऽलङ्कारप्रकरणे प्रमाणान्तरेण प्राप्तस्यैव वस्तुनः पुनः शब्देन प्रतिपादनं प्रयोजनान्तराभावात् स्वतुल्यान्यव्यवच्छेदं गमयतीति । भागवतेऽपि—

लोके व्यवायामिषमद्यसेवा
नित्यास्तु जन्तोर्न हि तत्र चोदना ।
व्यवस्थितिस्तेषु विवाहयज्ञ—
सुराग्रहैरासु निवृत्तिरिष्टा ॥ इति ।

व्यवायो मैथुनम् , आमिषं मत्स्यादि, मद्यम्-एतेषां सेवा जन्तोः प्राणि-

---

नुर्धरत्ववान् पार्थ इतिशाब्दबोधोऽत्रावसेयः । *द्वाभ्यां निषेधाभ्यामिति* । अभावाभावस्य प्रतियोगित्वस्वरूपत्वेन पाण्डुरत्वसम्बन्धाभावाभाववान् शङ्ख इति बोधः । अभावस्य निषेधेन पाण्डुरत्वसम्बन्धः शङ्खे बोध्यत इति भावः ।

*नीलं सरोजमिति* । सामानाधिकरण्येन तदभावानधिकरणं यत् सरोजं नीलभवनसमभिव्याहृतं तत्प्रकारकेत्यर्थः । नीलाभिन्नसरोजाभिन्नकर्तृकमवधारणविशेष्यं भवनमिति बोधः ।

*तदुक्तं भाष्ये* । पस्पशाह्निके इति शेषः । *गम्यत इति* । भक्ष्यभिन्नतया ग्राम्य एव कुक्कुटः प्रतीयते । तथाहि—भक्षणम्—क्षुन्निवर्तको व्यापारविशेषः । क्षुन्निवृत्तिश्च रागतो ग्राम्यतदितरभक्षणेन च भवितुमर्हति इतिप्रकृतवाक्यं व्यर्थीभूय नियमयति ग्राम्य एवाभक्ष्य इति तेन इतरभक्षणं फलति । एवं "पञ्च पञ्च नखा भक्ष्या" इत्यनेनाप्युक्तदिशा भक्ष्यनियमेनाभक्ष्यप्रतिषेधसिध्या शशकादिपञ्चकेतरपञ्चनखभक्षणाभावः फलतीति दिक् । आलङ्कारिकाः—मम्मटादयः । *व्यवायः*—सुन्दरीगमनम् । *आमिषः*—मांसम् । *मद्यसेवेति*। तथाच तैत्तिरीयब्राह्मणम्-"ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारं यदि ब्राह्मणं न विन्देत वल्मीकवपायामवनमयेत् सा तत्र

मात्रस्य नित्यारागतः प्राप्ताः। अतस्तत्र चोदना विधिर्नास्ति। नन्वेवम् "ऋतौ भार्य्यामुपेयात्" "हुतशेषम्भक्षयेत्" "सौत्रामण्यां सुराग्रहान् गृह्णाति" इत्येतेषां वैयर्थ्यम्। भार्यां विवाहिताम्। तत्राह व्यवस्थितिरिति। तेषु पुनः प्रापणमित्यर्थः। नियमस्यान्यनिवृत्तिफलकत्वादाह आसु निवृत्तिरिष्टेति। अन्येष्विति शेषः। तदुक्तम्—

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।

---

प्रायश्चित्तिः" इति। ब्राह्मणो हि आहुत्या उच्छेषणस्य पाता। अकरणे प्रत्यवायाभावरूपयित्यत्वाभावादाह—*रागत इति*। स्वभावत इत्यर्थः। न हि कश्चित्प्राणी क्षुत्प्रतिघातमन्तरेण प्राणधारणे समर्थो भवति। अतो येन केनाप्युपायेन प्राणधारणे तस्य प्रवृत्तिः स्वभावसिद्धेति भावः।

*ऋतौ भार्यामिति*। त्रिविधोऽत्र नियमः-ऋतावेव, भार्य्यामेव, उपेयादेवेति आद्ये गमननिवृत्तिःफलम्। द्वितीये—भार्य्येतरस्त्रीगमननिवृत्तिः। अन्त्ये—उपगमनाभावनिवृत्तिश्च फलं बोध्यम्। अत एव गृहस्थस्यानृतौ अनुपगमने ब्रह्मचर्यमुक्तम्। अविवाहितागमने, ऋतौ भार्यागमनाभावे प्रायश्चित्तं प्रोक्तं स्मृतिषु॥

एतेन ऋतावित्यत्र नियम एव युक्तो, न परिसंख्येति न्यायविदां चोक्तिः परास्तेति बोध्यम्।

*आसुनिवृत्तिरिति*। रागतो नित्यप्राप्तत्वात् नैते नियमविषयाः, पाक्षिक्यां हि प्राप्तौ नियमो भवति, किन्तु प्राप्तस्याप्यर्थस्य पुनः प्रापणमनर्थकमित्यपूर्वविधिद्वारा अन्यनिवृत्तिः फलति तदाह—*आसुनिवृत्तिरिति*। भाष्येऽपि नियमपदेनाभ्यनुज्ञा।

ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति।
घोरायां भ्रूणहत्यायां पच्यते—

इतिदोषश्रवणन्तु मनसि कामे सत्यपि तस्यां द्वेषादिनाऽनुपगमे बोध्यम्। *विधिरत्यन्तमप्राप्ताविति। यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽपूर्वविधिः। यथा—'स्वर्गकामो यजेत' 'अहरहः सन्ध्यामुपासीत', इत्यादौ यागस्य सन्ध्योपासनस्य च प्रमाणान्तरेण प्राप्तस्य विधानादनयोर्विधित्वम्। *नियमः पाक्षिके सतीति*। यो विधिः पक्षे प्राप्तमर्थं नियमयति स नियमविधिः। यथा—'व्रीहीनवहन्ति' 'समे यजति' इत्यादौ तुषविमोकस्यावघातेन नखविदलनेन च सम्भवाद्यदा नखविदलनेनैव तुषविमोकेच्छा तदाऽवघातस्याप्राप्तत्वात्पाक्षिकस्य तस्य विधानात्, एवं यदा विषमदेश एव सौकर्यादिना यागकरणेच्छा तदाऽप्राप्तत्वात्पाक्षिकस्य समदेशाधिकरणकत्वस्य विधानाच्चानयोर्नियमत्वम्। अववातेनैव तण्डुलनिष्पत्तावपूर्वोत्पत्तिर्नतु नखविदलनेन, समदेशाधिकरणकयागेनैवापूर्वोत्पत्तिर्नतु विषमदे-

तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते ।। इति ।

स्वर्गकामोऽश्वमेधेन यजेतेति विधिः । क्षुत्प्रतिघातो यद्यपि शशकादिमांसैः श्वादिमांसैश्च भवति; तथापि शशकादिमांसैरेव कर्त्तव्य इति परिसङ्ख्यायते 'पञ्च पञ्च नखा भक्ष्या' इत्यनेन नखविदलनावहननाभ्यां व्रीहेर्निस्तुषीकरणं प्राप्तम्, तत्रावहननेन निस्तुषी करणं पुण्यजनकमिति 'व्रीहीनवहन्ति'इत्यनेन नियम्यते। यद्यपि परिसङ्ख्यायां नियमे च स्वार्थहानिः प्राप्तबाधः परार्थकल्पना चेति दोषत्रयम्, तथाप्यनन्यगत्या स्वीक्रियते इति वृद्धाः । 'पञ्च पञ्च नखा' इत्यस्य नियमत्वेन भाष्ये व्यवहृतत्वात् अन्यनिवृत्तिरूपफलेनैक्याच्च । नियमपदेन परिसङ्ख्याऽपि व्याकरणे गृह्यत इति संक्षेपः ।

इति निपातार्थविचारः ।

---

शाधिकरणकयागेनेति नियम्यते ।

*तत्र चान्यत्र च प्राप्ताविति* । उभयस्य युगपत्प्राप्तौ इतरनिवृत्तिफलको विधिः परिसंख्याविधिः । यथा–'पञ्च पञ्च नखा भक्ष्या' इति । अत्र क्षुन्निवृत्त्यर्थं रागात् शास्त्रव्यापारमन्तरेणैव भक्षणं प्राप्तम् , तच्च भक्षणं पञ्चसु पञ्चनखेषु अन्यत्र च श्वमांसादिषु युगपत् प्राप्तम् , तत्र पञ्चनखभक्षणेनैव क्षुन्निवृत्तिः कार्या इत्यनेन परिसंख्यायते । अपञ्चनखभक्षणन्तु निवर्तते इति परिसंख्याविधिरयम्बोध्यः ।

*स्वर्गकाम इति* । अश्वमेधेनेत्यत्राभेदस्तृतीयार्थो ; यागान्वयी भावना च लिङर्थः । तस्यां च यागादिः करणतयान्वेति । तेन–अश्वमेधाभिन्नयागकरणिका स्वर्गकामिका भावनेतिबोधः ।

*व्रीहीनवहन्तीति* । अयं च पुरोडाशप्रकरणे पठ्यते । तत्रावघातस्तण्डुलनिष्पत्त्यर्थः । सा च नखविदलनेनापि भवितुमर्हतीति तत्र नियमः क्रियते अवघातजन्यतण्डुलनिष्पत्त्या पुरोडाशभरणमेवाभ्युदयकारि भवति, नान्यथेति तदेतदेवानुवदति— *तत्रावहननेत्यादि* ।

ननु परिसंख्यायां दोषत्रयसत्त्वेऽपि नियमे दोषत्रयोक्तिः कथं संगच्छते । पाक्षिकाप्राप्तिकाप्राप्तांशपरिपूरणफलो नियमः । अन्यनिवृत्तिफला च परिसंख्येति द्वयोर्भेदादत आह—*पञ्च पञ्च नखेति* । अप्राप्तांशपरिपूरणरूपफलबाधनद्वाराऽर्थान्यनिवृत्तेर्नियमेऽपि सत्त्वात् द्वयोरभेदादुभयत्र दोषत्रयोक्तिर्नासङ्गतेति भावः ।

*अन्यनिवृत्तिरूपफलेनैक्याच्चेति* । अन्यनिवृत्तिरूपनियमसाधर्म्यणात्र शास्त्रे परिसंख्याया अपि नियमशब्देन व्यवहारादिति भावः ।

इत्यर्थदीपिकायां निपातविचारः ॥

## अथ दशलकारादेशार्थाः ।

यद्यपि लकाराणामेवार्थनिरूपणं तार्किकैः कृतम् ; तथापि 'उच्चारित एव शब्दोऽर्थप्रत्यायको नानुच्चारित' इति भाष्याल्लोके तथैवानुभवाच्च तदादेशतिङामर्थो निरूप्यते। "वर्त्तमाने लट्" इत्यादिविधायक "लः कर्मणि" इतिशक्तिग्राहकसूत्राणामादेशार्थं स्थानिन्यारोप्य प्रवृत्तिः। तत्र सङ्ख्याविशेष—कालविशेष—कारकविशेष-भावा लादेशमात्रस्यार्थाः। तथाहि-लडादेशस्य वर्तमानकालः, शबादिसमभिव्याहारे कर्ता, यक्चिण्समभिव्याहारे भावकर्म्मणी, उभयसमभिव्याहारे एकत्वादिसङ्ख्या चार्थः। तदाह—

फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः।

---

ननु लकाराणामेव कर्त्राद्यर्थेषु शक्तिः, लत्वस्यावच्छेदकत्वे लाघवात्। न तु तिबादीनाम्। शक्ततावच्छेदकगौरवादत आह—*लकाराणामेवेति*।

*उच्चारित इति*। लोके ह्यादेशा एव प्रयुज्यन्त इति तत एवार्थबोधदर्शनात्तेषामर्थविचार एव ज्यायानिति भावः। अत्र यत्किञ्चिदर्थविषयकशाब्दबोधं प्रति उच्चारितशब्दनिष्ठवृत्तिज्ञानाधीनोपस्थितिः कारणमिति कार्यकारणभावोऽवसेयः। अत एव रामान् रमाः इत्यादौ नकारविसर्गयोरेव कर्मत्वबोधनं न शसादेरिति भावः। *तथैवानुभवादिति*। अन्वयव्यतिरेकाभ्यामेव जन्यजनकभावस्य निर्णयदिति तात्पर्यम्। ननु "लः कर्मणि च" इत्यादिना लकाराणामेवार्थनिरूपणादादेशतिङामर्थाप्रसिद्ध्या तन्निरूपणमयुक्तमत आह-*वर्तमाने लडित्यादिना*। बोधकत्वरूपां तिबाद्यादेशगतां कर्त्रादिशक्तिं तत्स्थानित्वेन कल्पितेषु लकारेषु आरोप्य "लः कर्म्मणि" इत्यादिसूत्रप्रवृत्तिरप्युपपादनीयेति भावः। *शबादीति*। अत्रादिपदेन शतृ-शानच्कानच्-शप्-श्नम्-श-श्नादीनां सङ्ग्रहो ज्ञेयः।

अत्र कार्यकारणभावस्तु—धातुजन्याश्रयनिष्ठप्रकारतानिरूपितव्यापारनिष्ठविशेष्यताशालिबुद्धित्वावच्छिन्नम्प्रति धातूत्तरशबादिग्रहः कारणम्। तथा आश्रयनिष्ठप्रकारतानिरूपितफलनिष्ठविशेष्यताशालिबुद्धिम्प्रति धातूत्तरतङ्-यक्-चिणादन्यतमग्रहः कारणमिति च बोध्यः।

*समभिव्याहार इति*। यत्किञ्चिद्विशिष्टत्वं समभिव्याहृतत्वम्। वैशिष्ट्यञ्च-स्वानियतोत्तरत्वम्, स्वनियतपूर्वत्वम्, एतदन्यतरसम्बन्धेन। लक्षणसमन्वयस्तु स्पष्टत्वात्स्वयमेवोह्यः।

*फलव्यापारयोरिति*। तत्र-'फलव्यापारयोर्मध्ये तङ्यक्चिणादयः' फले आश्रय-

व्यापारे शपूश्नमाद्यास्तु द्योतयन्त्याश्रयान्वयम् ॥

फलव्यापारौ तु धात्वर्थावित्युक्तमेव । तत्र तिङ्समभिव्याहारे तदर्थ-सङ्ख्या तदर्थकारके विशेषणम् । कालस्तु व्यापारे । तदाह—

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥

तिङर्थः कर्ता व्यापारे, कर्म च फले विशेषणम् । "क्रियाप्रधानमाख्यात-

---

स्येप्सिततमस्यान्वयं द्योतयन्ति, शबादयस्तु व्यापारे आश्रयस्य प्रथमान्तार्थस्या-न्वयं द्योतयन्तीति यावत् । *तदर्थसंख्येति* । तिङर्थः—तिङर्थकारके कर्तरि कर्मणि चान्वेतीति भावः । *कालस्त्विति* । यद्यपि 'समानाभिधानश्रुतेः' कालोऽपि कारक एवान्वेतुमर्हति, तथापि अतीते पाककर्तरि च वर्तमाने पचतीत्यस्य पाके वर्तमाने कर्तरि चातीतेऽपाक्षीदित्यादिप्रयोगापत्तिभिया कालस्य व्यापारेऽन्वयः स्वीकर्त-व्येति भावः ॥

*फलव्यापारयोरिति* । तत्र धातुरित्यस्य 'स्मृताः' इति न विशेषणम्, विभिन्न-वचनान्तोपस्थापितत्वात् । विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्ध-संख्याया अविवक्षायां विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियमात् । अत एव 'नीलो घटाः' इत्यादेर्न साधुत्वम् । धातूनां फलव्यापारयोः शक्तिः, तिङः—आश्रये, नाम—फलाश्रये व्यापाराश्रये चेत्यर्थः। फलव्यापारयोर्मध्ये फलं विशेषणम् । व्यापारः-प्रधानम् । तिङर्थोऽपि व्यापारे विशेषणमिति कारिकार्थः ।

*क्रियाप्रधानमिति* । "भूवादयो धातवः" इति सूत्रस्थक्रियाप्राधान्यबोधकभा-ष्यात् "क्रियाप्रधानमाख्यातम्" इतिनिरुक्ताच्च कर्माख्याते आख्याते क्रियाख्याते आ-ख्याते च सर्वत्र व्यापारमुख्यविशेष्यक एव बोधः । यथा—'ग्रामं गच्छति चैत्रः' इत्यत्र ग्रामाभिन्नकर्मनिष्ठोत्तरदेशसंयोगानुकूलः एकत्वावच्छिन्नचैत्राभिन्नकर्तृको वर्तमान-कालिको व्यापारः । ग्रामो गम्यते चैत्रेण इत्यादौ चैत्राभिन्नकर्तृजन्यो वर्तमान-कालिक एकत्वावच्छिन्नो ग्रामाभिन्नकर्मनिष्ठो यः संयोगस्तदनुकूलो व्यापार इति च प्राचां मते शाब्दबोधः । अत एव "फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्" इत्यपि सङ्गच्छते ।

अन्यास्तु—कर्तृरूपाख्याते व्यापारमुख्यविशेष्यकबोधः । कर्माख्याते तु फलमु-ख्यविशेष्यको बोधः स्वीकुर्वन्ति। ननु तर्हि "फले प्रधानं व्यापारः तिङर्थस्तु विशेषण-म्" इति कथं सङ्गच्छते इतिचेत्? तत्र व्यापारस्य प्राधान्येन बोधनं कर्त्राख्याताभि-प्रायेणेति गृहाण ।

अन्ये तु "फलेप्रधानं व्यापारः" इत्यत्र उभयपदच्छेदः, प्रधानम्—अप्रधानञ्चे-

म्" इति यस्कोक्तौ क्रियापदं करणव्युत्पत्त्या व्यापारपरं कर्मव्युत्पत्त्या फलपरमिति बोध्यम्। तथाच ग्रामं गच्छति चैत्र इत्यत्रैकत्वावच्छिन्नचैत्राभिन्नकर्तृको वर्तमानकालिको ग्रामाभिन्नकर्मनिष्ठो यस्संयोगः तदनुकूलो व्यापारः, ग्रामो गम्यते मैत्रेणेत्यत्र तु मैत्रकर्तृकवर्तमानकालिकव्यापारजन्यो ग्रामाभिन्नकर्मनिष्ठः संयोग इति च बोधः। वर्तमानकालत्वं च प्रारब्धापरिसमाप्तक्रियोपलक्षितत्वम्।

लिट्तिङस्तु भूतानद्यतनकालः परोक्षत्वं चाधिकोऽर्थः। शेषं लड्वत्(१)। परोक्षत्वं च(२)कारके विशेषणं न तु क्रियायाम्, तस्या(३)अतीन्द्रियत्वेन

---

त्याहुः। तेन नव्यानां मते कारिकार्थोऽपि संगत इति बोध्यम्।

*एकत्वावच्छिन्नेति*। अत्रावच्छिन्नत्वम्—आश्रयत्वम्, तच्च समवायसंसर्गेण बोध्यम्। *वर्तमानकालत्वञ्चेति*। प्रयोगविशिष्टत्वं वर्तमानत्वम्। वैशिष्ट्यञ्च स्वाधिकरणत्वम्, स्वघटकधातुबोध्यत्वेन तात्पर्यविषयीभूतक्रियाकलापान्तर्गताद्यक्रियाप्रागभावानधिकरणत्वम्, स्वघटकधातुबोध्यत्वेन तात्पर्यविषयीभूतक्रियाकलापान्तर्गतान्त्यक्रियाध्वंसानधिकरणत्वम्, एतत्त्रितयसम्बन्धेन। द्वितीयसम्बन्धनिवेशात् भविष्यकाले वर्तमानलक्षणस्य नातिव्याप्तिः। तृतीयसम्बन्धदानेन भूतकाले वर्तमानलक्षणस्य नातिव्याप्तिरिति ध्येयम्। *प्रारब्धेति*। प्रारब्धा च अपरिसमाप्ता च या क्रिया तादृशक्रियोपलक्षितकालत्वमित्यर्थः। *क्रियोपलक्षितेति*। क्रियाश्रयत्वमित्यर्थः। *भूतानद्यतनेति*। "भूते" इत्यधिकाराद्भूते इति "अनद्यतने" इत्यधिकारात् अनद्यतने इति च द्वयमपि "परोक्षे लिट्" इत्यत्रानुवर्तते। 'अतीतायाः रात्रेः पश्चार्धेन आगामिन्याः पूर्वार्द्धेन च सहितः कालोऽद्यतनस्तद्भिन्नोऽनद्यतनः।

*परोक्षत्वञ्चेति*। अत्र व्यापाराविष्टानां क्रियानुकूलसाधनानामेव पारोक्ष्यं विवक्षितम्। तेन अतीतानद्यतनव्यापाराविष्टपरोक्षकर्तृकक्रियावृत्तेर्धातोर्लिट् इति "परोक्षे लिट्" इति सूत्रस्यार्थः। *शेषमिति*। संख्याकर्तृकर्मरूपा अर्था यथा लटस्तथा लिटोऽपीत्यर्थः।

---

(१) शेषं लड्वदिति। शेषं संख्याकारकं लड्वदित्यर्थः। एवमुत्तरत्र सर्वत्र बोध्यम्।

(२) कारके, क्रियाविष्टे इति शेषः। तेन गमनादिक्रियानाविष्टस्य देवदत्तस्य दर्शनेऽपि "न देवदत्तो जगाम" इत्यादिप्रयोगानुपपत्तिरिति बोध्यम्।

(३) अतीन्द्रियत्वेनेति। न च तस्या अतीन्द्रियत्वे 'पश्य मृगो धावति' इत्यत्र धावनस्य दर्शनविषयत्वानुपपत्तिरिति वाच्यम्। तत्र दृशेर्ज्ञानसामान्यार्थकत्वाङ्गीका-

लिट्सूत्रे भाष्ये प्रतिपादनात् व्यभिचाराभावात्। कृभ्वाद्यनुप्रयोगस्थले कृभ्व-सांक्रियासामान्यमर्थः। आम्प्रकृतेस्तु तत्तत्क्रियाविशेषः। सामान्यविशे-षयोरभेदान्वयः। अकर्मकप्रकृतिकामन्तानुप्रयुक्तकृभ्वसामकर्मिकैव क्रिया।

वस्तुतस्तु अनुप्रयुक्तानां कृभ्वसां फलशून्यक्रियासामान्यवाचकत्वमेव। सकर्मकाकर्मकत्वव्यवहारस्तु आम्प्रकृतिभूतधातोरेवेति निष्कर्षः। एवञ्च एधाञ्चक्रे चैत्र इत्यत्र एकत्वावच्छिन्नपरोक्षत्वावच्छिन्नचैत्रकर्तृका भूतान-द्यतनकालाधिकरणिका वृद्ध्यभिन्ना क्रियेति बोधः। परोक्षत्वं च(१)साक्षात्कृ-तमित्येतादृशविषयताशालिज्ञानाविषयत्वम्। भूतानद्यतनत्वं च(२) अद्यतना-

---

*लिट्सूत्रे भाष्ये इति*। तत्र हि—"क्रिया नामेयमत्यन्तापरदृष्टा पूर्वापरीभूताऽवयवा न शक्या पिण्डीभूता निदर्शयितुम्" इत्युक्तम्। अनेन भाष्येण क्रियाया अती-न्द्रियत्वं सुस्पष्टमेव लभ्यते। नन्वेवं तर्हि परोक्षे इति व्यर्थमितिचेत्, न पिण्डीभूतायाः क्रियायाः निदर्शयितुमशक्यत्वेऽपि अवयवशः साक्षात्करोमीति प्रतीतिविषयत्व-सम्भवात्। अन्यथा 'पश्य मृगो धावति' इत्यत्र तस्याः दर्शनकर्मता न स्यादिति भावः। *व्यभिचाराभावादिति*। अतीन्द्रियस्य पदार्थस्य परमाणोरिव बहिरिन्द्रिय-जन्यप्रत्यक्षस्यायोग्यत्वात् सर्वत्र परोक्षताया एव क्रियायाः सत्वात् "सम्भवव्यभिचा-राभ्यां स्याद्विशेषणमर्थवत्" इति न्यायात् व्यभिचाराभावेन न क्रियायां विशेषणमि-तितात्पर्यम्। *कृभ्वादीति*। "आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य" इति सूत्रे कृञ्ग्रहणेन "कृञ्चानुप्रयुज्यते लिटि" इति सूत्रे प्रत्याहाराश्रयणात् 'कृ-भू-अस्' इत्यनुप्रयोगो लभ्यत इति भावः। *फलशून्यक्रियेति*। व्यापारमात्रमित्यर्थः।

*साक्षात्कृतमित्येतादृशेति*। साक्षात्कृतमिति विशेषणेन 'सुप्तोऽहं किल विल-

---

रात्। शीघ्रं शीघ्रं देशान्तरसंयोगदर्शनेन च धावनमनुमीयते इति तस्यानुमितिविष-यत्वमेव पश्य मृगो धावतीत्यत्र बुध्यते इति भावः।

(१) साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाविषयत्वमिति। अनेन "सुप्तो-ऽहं किल विललाप" इत्यादौ स्वकृतविलापस्य स्वप्रत्यक्षत्वेऽपि परोक्षत्वमुपपन्नम्। तत्काले साक्षात्करोमि इत्येवं साक्षिभास्यत्वेऽपि निद्रादिदोषात् तदंशे संस्कारानुद्-येन साक्षात्कृतत्वावच्छिन्नविषयताशालिज्ञानाविषयत्वस्य सुवचत्वात्। अत एव सा-क्षात्करोमि इति त्यक्त्वा साक्षात्कृतमित्युपात्तमिति भावः।

(२) अद्यतनाष्टप्रहरीव्यतिरिक्तत्वे सतीति। अद्यतनानद्यतनविभागश्च त्रेधा। अतीताया रात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन च सहितो दिवसोऽद्यतनस्तद्भिन्नोऽनद्य-तन इत्येकः प्रकारः। अतीताया रात्रेः अन्त्यतृतीयभागेन आगामिन्या आद्यतृतीय-

द्वप्रहरीव्यतिरिक्तत्वे सति भूतत्वम् । लुडादेशस्य तु भविष्यदनद्यतनार्थोऽधिकः । शेषं लड्वत् । भविष्यत्त्वं च वर्त्तमानप्रागभावप्रतियोगिक्रियोपलक्षितत्वम् । लृट्तिङस्तु भविष्यत्सामान्यमर्थः । लेट्तिङस्तु विध्यादिरर्थः । "छन्दसि लिङर्थे लेट्" इति सूत्रात् । लट्प्रक्रियातो लेटोऽडाटाविति विशेषः । भवाति भवतीतिप्रयोगदर्शनात् । लोट्तिङस्तु विध्यादिरर्थः । तत्राधीष्टं (१) सत्कारपूर्वको व्यापारः, आगच्छतु भवान् जलं गृह्णातु इत्यादौ । सम्प्रश्नोऽनुमतिः, गच्छति चेत् भवान् गच्छत्वित्यादौ । लङादेशस्य तु भूतानद्यतनत्वमधिकोऽर्थः । शेषं लड्वत् । लिङादेशस्य तु विध्यादिरर्थः । तत्र विध्यादिचतुष्टयानुस्यूतप्रवर्त्तनात्वेन चतुर्णां वाच्यता लाघवात् । तदुक्तं हरिणा—

अस्ति प्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपि ।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥ इति ।

---

लाप' इत्यादौ स्वविलापस्य स्वप्रत्यक्षत्वेऽपि निद्रादिदोषवशात् संस्काराजननेन न परोक्षत्वानुपपत्तिरिति भावः । *शेषं लड्वदिति* । यथा लट्प्रयोगे संख्याकालकारकाणां विशेष्यविशेषणभावस्तथाऽत्रापि ज्ञेय इति तात्पर्यम् ।

*क्रियोपलक्षितत्वमिति* । क्रियाधिकरणत्वमित्यर्थः । *लट्प्रक्रियेति* । सावनप्रकारो लट् इवेति भावः । लटमपेक्ष्य यो विशेषस्तमाह—*लेटोऽडाटाविति* ।

*विध्यादिचतुष्टयेति* । अत्र विध्यादीनां तत्तद्रूपेण वाच्यतास्वीकारे नानार्थापत्तेः । अतोऽत्र प्रवर्तनात्वेनैव वाच्यता स्वीकर्तव्या लाघवात् । अस्ति चात्र चतुर्ष्वप्यनुगतत्वेन प्रवर्तनेति भावः । *किम्भेदस्येति* । तत्तद्रूपेण पार्थक्यादित्यर्थः । तत्तद्रूपेण शक्तेरनङ्गीकारादिति भावः ।

नन्वेवं तर्हि "विधिनिमन्त्रणामन्त्रणाधीष्ट—" इतिसूत्रे विध्यादीनां ग्रहणं व्यर्थं स्यादिति चेत्, न । प्रवर्तनाया भेदबोधकत्वे न तेषां सार्थक्यात् । अत एव—

"न्यायव्युत्पादनार्थम्वा प्रपञ्चार्थमथापि वा ।

---

भागद्वयेन च सहितो दिवसोऽद्यतनः, तद्भिन्नोऽनद्यतन इति द्वितीयः । उदयादुदयं यावदद्यतनः तद्भिन्नोऽनद्यतन इति तृतीयः । अत्र च देशाचाराद् व्यवस्था ज्ञेया ।

( १ ) अधीष्टमिति । बहुषु पुस्तकेषु अधीष्ट इति पुंलिङ्गपाठो दृश्यते । तत्र भावक्तान्तादर्शआद्यज् बोध्यः । तत्र भावक्तान्तस्य सत्कारोऽर्थः, तत्पूर्वको व्यापारश्च अच्प्रत्ययान्तार्थः ।

प्रवर्त्तनात्वं च-प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम् , तच्चेष्टसाधनत्वस्यैवेति तदेव लिङर्थः । न तु कृतिसाध्यत्वं, तस्य यागादौ लोकत एव लाभादित्यन्यलभ्यत्वात् । न च बलवदनिष्टाननुबन्धित्वं, द्वेषाभावेनान्यथासिद्धत्वात् , इत्यन्यत्र विस्तरः । लुङादेशस्य तु भूतसामान्यमर्थः । भूतत्वं च-वर्तमानध्वंसप्रतियोगिक्रियोपलक्षितत्वम् । लृङादेशस्य तु क्रियातिपत्तौ गम्यमानायां हेतुहेतुमद्भावे च गम्यमाने भूतत्वं भविष्यत्त्वञ्चार्थः । आपादना तु गम्यमाना । भूते, एधश्चेदलप्स्यत ओदनमपक्ष्यत् । भविष्यति, सुवृष्टिश्चेदभविष्यत्सुभिक्षमभविष्यदिति सङ्क्षेपः ।

अथ नैयायिकानां मते सङ्क्षेपाल्लकाराणामर्थो निरूप्यते । तत्र लडादिलृङन्ता दश लकाराः । तत्र लकारस्य कर्त्ता कालः सङ्ख्या चेति त्रयोऽर्थाः। तत्र कर्तेति पातञ्जलाः । "लः कर्म्मणि च" इति सूत्रे चकारेण कर्तुः परामर्शात् । कर्तृस्थाने व्यापार इति भाट्टाः । यत्न इति नैयायिकाः । युक्तं चैतत् । व्यापारताद्यपेक्षया लाघवेन यत्नत्वस्यैव शक्यतावच्छेदकत्वात् । शक्तावच्छेदकञ्च लकारसाधारणं लत्वमेव भवतीत्यादौ चादेशेनादेशिनो

---

विध्यादीनामुपादानं चतुर्णामादितः कृतम्" ॥

इति हरिणाप्युक्तम् । *तच्चेति* । निरुक्तावच्छेदकत्वञ्चेत्यर्थः । *इष्टसाधनत्वस्यैवेति*। अत्र इष्टत्वञ्च-समभिव्याहृतपदोपस्थापितकामनाविषयत्वम्। 'स्वर्गकामो यजेत'इत्यत्र स्वर्गकामपदोपस्थापितकामनाविषयत्वस्य स्वर्गे सत्वादिष्टत्वं तस्याक्षतम् तेनैव च स्वर्गादीष्टानामनुगम इति बोध्यम्। यजेदित्यादिवाक्याद्यागोबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनतावानिति वाक्यार्थबोधमभ्युपेत्य इष्टसाधनत्वे बलवदनिष्टाननुबन्धित्वविशेषणमभ्युपगच्छतो नैयायिकानाक्षिपति-*नचेत्यादिना* । *द्वेषाभावेनेति* । प्रवृत्ति प्रति द्वेषस्य प्रतिबन्धकत्वेन यत्कार्यं प्रति यस्य प्रतिबन्धकत्वम् , तदभावस्य तत्कार्यम्प्रति कारणत्वं सिध्यतीति भावः ।

*चकारेणेति* । "लः कर्मणि,च भावे चाकर्मकेभ्यः" अत्र सूत्रे "कर्मणि च" इत्येको योगः, 'भावे चाकर्मकेभ्यः, इत्यपरः, तत्रोभयत्रापि "कर्तरि कृत्" इति सूत्रात् चकाराभ्यां कर्तरीत्यनुकृष्यत इति ध्येयम्। *व्यापार इति* । मीमांसका भावनात्वेनैव व्यापारे लकाराणां।शक्तिमङ्गीकुर्वन्तीति भावः ।

*यत्न इति* । कृतिरित्यर्थः । *व्यापारताद्यपेक्षयेति* । तज्जन्यत्वविशिष्टतज्जन्यजनकत्वस्यैव व्यापारत्वेन कृतित्वजात्यपेक्षया गौरवान्न व्यापारे शक्तिरिति नैया-

लस्यैव स्मरणादन्वयधीः । आदेशेषु बहुषु शक्तिकल्पने गौरवात् । तदस्मरणे च शक्तिभ्रमादेशान्वयधीः । 'चैत्रो गन्ता गतो ग्रामः' इत्यादौ सामानाधिकरण्यानुरोधेन यथायथं कर्तृकर्मणी कृद्वाच्ये । नचैवं "लटः शतृशानचौ" इत्यनेन शतृशानचोरादेशत्वात्कथं कर्त्तरि शक्तिः । आदेशिशक्त्या निर्वाह एवादेशशक्त्यकल्पनात् । चैत्रः पचन्नित्यादौ सामानाधिकरण्यानुरोधादादेशिशक्त्याऽनिर्वाहादत्रादेशेऽपि शक्तिः ।

इयांस्तु विशेषः-लत्वेन यत्ने शक्तिः, आत्मनेपदत्वेन फले । 'मैत्रेण गम्यते ग्राम' इत्यादौ मैत्रवृत्तिकृतिजन्यगमनजन्यफलशाली ग्राम इत्यन्वयबोधात् । कृतिश्चात्र तृतीयार्थः । जन्यत्वं संसर्गः । मैत्रः कृतौ विशेषणम् , सा च गमने, तच्च फले, तच्च ग्रामे । 'ग्रामं गच्छति मैत्र' इत्यत्र तु ग्रामवृत्तिफलजनकगमनानुकूलकृतिमान्मैत्र इति बोधः । फलं च द्वितीयार्थः । जनकत्वं संसर्गः । ग्रामश्चात्र फले विशेषणम् , तद् गमने, तच्च कृतौ, सा मैत्रे इति विशेष्यविशेषणभावभेदेनैव कर्मकर्तृस्थलीयबोधयोर्विशेषः । तावन्तः पदार्थास्तूभयत्रैव तुल्याः । मैत्रेण ज्ञायते इष्यते क्रियते घट इत्यादौ तु वृत्तिस्तृतीयाया, विषयता त्वाख्यातस्यार्थः । मैत्रवृत्तिज्ञानविषयो घट इति बोधः । घटं जानाति मैत्र इत्यादौ तु विषयता द्वितीयाया, आश्रयत्वं चाख्यातस्यार्थः । घटविषयकज्ञानाश्रयो मैत्र इति बोधः ।

---

यिकानां तात्पर्यम् । एवमपि न लकाराणां कर्तरि शक्तिः । कर्तृत्वस्य शक्यतावच्छेदकत्वेन गौरवात् । एवं वैयाकरणानाम्—आख्यातपदजन्यशाब्दबुद्धित्वावच्छिन्नम्प्रति आश्रयतात्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नाश्रयत्वप्रकारकोपस्थितेः कारणत्वम् । आश्रयतात्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नाश्रयत्वप्रकारकोपस्थितिं प्रति तादृशाश्रयत्वप्रकारकाश्रयनिष्ठशक्तिज्ञानस्य कारणत्वं वक्तव्यमिति गौरवम् । नैयायिकानां तु कृतित्वप्रकारकोपस्थितिः कृतिनिष्ठशक्तिज्ञानञ्च शाब्दबोधोपस्थित्योः कारणमिति लाघवम् ॥

*तदस्मरण इति* । तस्य स्थानिनो लकारस्य स्मरणाभावे इत्यर्थः । एवञ्चातिब्याप्त्वादिरूपेणैव शक्तिभ्रमादन्वयबोध इति व्यवस्था ।

*आत्मनेपदत्वेनेति* । अन्यूनानतिप्रसक्तधर्मस्यैवावच्छेदकत्वनियमेन आत्मनेपदत्वस्य तथात्वात् । तत्वञ्च-पाणिनीयसङ्केतसम्बन्धेनात्मनेपदवत्वमित्यनुगम इति यावत् । *मैत्रवृत्तीति* । कर्तृकर्माख्याते शाब्दबोधप्रकारोऽयमिति भावः ।

कालश्चातीतवर्त्तमानानागतात्मा यथायथं लडादेरर्थः । लटो भवतीत्यादौ वर्त्तमानत्वं, लङ्लुङ्लिटाम् अभवत् अभूत् बभूवेत्यादौ भूतकालः, लुड्लृटोर्भविता भविष्यतीत्यादौ भविष्यत्कालः । लिङ्लोड्लेटां भवेत् भवतु आग्नेयोऽष्टाकपालो भवतीत्यादौ विधिः । सङ्ख्या च केवलार्थः ।

लेटस्तु छन्दस्येव प्रयोगः । तत्र दीर्घत्वमपि विकल्पेन भवति, भवातीति दर्शनात् । तत्र व्यापारादिबोधकेन लटा वर्त्तमानत्वं व्यापारादावेव बोध्यते । पचतीत्यादितो वर्त्तमानपाकानुकूलव्यापारवानिति बोधात् । एवमन्यत्रापि ।

व्यापारबोधकाख्यातजन्यवर्त्तमानत्वप्रकारबोधे आख्यातजन्यव्यापारोपस्थितेर्हेतुत्वकल्पनान्नातिप्रसङ्गः ।

व्यापाराबोधकज्ञाधात्वादिसमभिव्याहृताख्यातजन्यवर्त्तमानत्वप्रकारकबोधे तु तादृशधातुजन्योपस्थितिर्हेतुः । कार्यताकारणतावच्छेदिका च प्रत्यासत्त्या विषयतैवेति नातिप्रसङ्गः । जानाति इच्छति यतते इत्यादौ वर्त्तमानत्वाश्रयज्ञानाश्रयत्वादिबोधस्यैवानुभविकत्वात् ।

तत्र लटा शक्त्या वर्त्तमानत्वं लक्षणयाऽऽश्रयत्वं बोध्यत इति विशेषः। लटा स्वाधिकरणकालोपाधिस्पन्द एव वर्त्तमानः प्रत्याय्यते । वर्त्तमानसामीप्ये विहितेन तु स्वानधिकरणसमीपवर्त्ती तादृशकालः । तत्रापि शक्तिर्लक्षणा वेत्यन्यदेतत् ।

---

*व्यापारादावेवेति* । आख्यातेनोपस्थाप्यकृतिरूपव्यापारे इत्यर्थः, न तु धात्वर्थव्यापारे; पचधात्वर्थव्यापारस्याग्निसंयोगरूपस्य सत्वे पुरुषयत्नस्य चासत्वेऽयं न पचतीतिप्रयोगात् । *नातिप्रसङ्ग इति* । आख्यातार्थ व्यापारान्वयबोधककार्यकारणभावस्य धात्वर्थव्यापारेऽप्रसक्त्या न तत्र वर्तमानकालान्वय इत्याशयः । *विषयतैवेति । कार्यताकारणतावच्छेदकसम्बन्धो विषयतारूप इति भावः ॥

अन्यथा कालिकादिसम्बन्धेन कारणस्यान्यत्रापि सत्वात् वर्तमानत्वप्रकारकबोधापत्तेः । *वर्तमानसामीप्य इति* । लट्प्रयोगाधिकरणसमीपवर्ती कालो भूतभविष्यद्रूपः, तदुपलक्षितव्यापार इत्यर्थः । अत्रेदम्बोध्यम्-वर्तमानसमीप्ये विहितलटो वर्तमानसामीप्यमर्थः । तच्च द्विविधम्—स्वप्रयोगाधिकरणक्षणाव्यवहितोत्तरकालावच्छेद्यत्वम्, स्वप्रयोगाधिकरणक्षणाव्यवहित प्राक्कालावच्छेद्यत्वञ्च । तच्च भूतभविष्यत्कालयोरेव । अव्यवहितत्वञ्च—स्वध्वंसाधिकरणसमयध्वंसानधिकरणत्वे सति प्रा-

नन्वेकदोपस्थितयोः कृतिवर्तमानत्वयोः कथं मिथोऽन्वयः। तत्पदज-न्यशाब्दबोधे पदान्तरजन्योपस्थितेर्हेतुत्वात्। कार्यतावच्छेदिका च प्रत्यासत्तिः प्रकारता। कारणतावच्छेदिका च विशेष्यतेति। अन्यथा हरिपदार्थयोः, दण्डेनेत्यादौ च करणत्वैकत्वयोर्मिथोऽन्वयापत्तेः। मैवम्। तत्तत्पदान्यत्वस्योक्तव्युत्पत्तौ प्रवेशात्। कथमन्यथैवकारार्थयोरन्ययोगव्यवच्छेदयोर्मिथोऽन्वयः।

घटो नश्यतीत्यादौ वर्त्तमानोत्पत्तिकत्वं प्रतियोगित्वं च लडर्थः। आद्यं नाशे प्रकारः, द्वितीयं घटे प्रकारः। वर्त्तमानोत्पत्तिकनाशप्रतियोगी घट इति बोधस्यानुभविकत्वात्। अत्र च वृत्तिद्वयस्य युगपद्बोधकत्वं सर्वैरेषितव्यम्। तादृशोत्पत्तिकत्वप्रतियोगित्वयोरर्थयोर्युगपदेव बोधात्। नच तादृशोत्पत्तिकत्वमेवार्थोऽस्तु। धात्वर्थस्य नाशस्य घटे प्रातिपदिकार्थे साक्षादन्वयासम्भवात्। न च प्रतियोगित्वमेवार्थोऽस्त्विति वाच्यम्। चिरनष्टेऽपि नश्यतीति प्रसङ्गात्।

एतेनात्र वर्त्तमानत्वमेवार्थो नोत्पत्तिरित्यपास्तम्।

केचित्तु लत्वमेवात्र प्रतियोगित्वस्य वृत्त्यवच्छेदकं लट्त्वन्तु तादृशोत्पत्तिकत्वस्य। एकधर्मावच्छिन्नवृत्तिद्वयस्यैव न युगपद्बोधकत्वम्। अन्यथा दण्डेनेत्यादौ करणत्वैकत्वयोर्बोधो न स्यादित्याहुः।

अन्ये तु नश्यतीत्यादौ लटा नाशसामग्र्येव बोध्यते। तेन न चिरनष्टे नश्यतीति प्रसङ्गः। अत एव विनश्यत्ता विनाशसामग्रीसान्निध्यमित्याहुः प्रामाणिकाः।

आख्यातात्क्रियाविशेष्यको बोध इति वैयाकरणाः भाट्टाश्च। आद्यानये

---

रभावध्वंसान्यतरसम्बन्धेन स्वाधिकरणत्वम्। लक्षणसमन्वयस्तु स्पष्टः।

*लडर्थ इति*। लटो वर्तमानत्वे शक्तिः, प्रतियोगित्वे लक्षणेति भावः। *वृत्तिद्वयस्येति*। ननु युगपद्वृत्तिद्वयविरोधेन वर्तमानोत्पत्तिकत्वप्रतियोगिकत्वयोः शाब्दबोधे भानं न स्यादिति चेत्, न अस्या असार्वत्रिकत्वात्। अन्यथा 'गङ्गायां मीनघोषौ स्तः' इत्यादौ जलप्रवाहतटयोर्बोधः कथं स्यादिति धेयम्। *एतेनेति*। ध्वंसस्य नित्यत्वाद्वर्तमानकालेऽपि सत्वेन चिरनष्टेऽपि नश्यतीति प्रयोगप्रसङ्गेनेत्यर्थः। तादृशोत्पत्तिकत्वस्येति*। वर्तमानोत्पत्तिकत्वस्येति तात्पर्यम्। *क्रियाविशेष्यक इति*।

धात्वर्थः क्रिया। चैत्रस्तण्डुलं पचतीत्यादितश्चैत्रकर्तृकतण्डुलकर्मकपाक इति धीः। अन्त्यनये भावना क्रिया प्रत्ययार्थः। चैत्रीयपाककरणिका तण्डुलकर्मिका भावनेति बोधः।

प्रथमान्तार्थविशेष्यक एव बोधः। ओदनकर्मकपाकानुकूलकृतिमांश्चैत्र इति बोध इति नैयायिकाः। द्वितीयाद्यर्थकर्मकरणत्वादेः क्रियायामेव सर्वमतेऽन्वयः।

लङस्तु शक्यो ह्योऽनद्यतनकालः। लुङस्तु भूतसामान्यम्। भूतत्वं च वर्त्तमानध्वंसप्रतियोग्युत्पत्तिकत्वम्, न तु तादृशप्रतियोगित्वमेव। चिरोत्पन्नेऽपि पूर्वेद्युरभवदितिप्रत्ययापत्तेः। नष्ट इत्यादौ नाशे तदन्वयासम्भवाच्च। उत्पत्तेस्तु देशकालादावन्वयान्न दोषः। अभवदित्यादौ तु धातुनोत्पत्तिः प्रत्याय्यते, नष्ट इत्यादौ तादृशोत्पत्तिकत्वं प्रत्ययेनेति विशेषः। लिटस्तु भूत काल इव परोक्षत्वमप्यर्थः। अहं चकारेत्यादिप्रयोगादर्शनात्। ननु चैवं

---

भूवादिसूत्रस्थभाष्यात् "भावप्रधानमाख्यातम्, क्रियाप्रधानानि नामानि" इतिनिरुक्ताच्च क्रियामुख्यविशेष्यकबोधस्यैवोक्तत्वादिति भावः। अत एव मीमांसकैरपि "तद्भूतानां क्रियार्थेन समाम्नायः" इतिसूत्रेण क्रियामुख्यविशेष्यकबोधस्यैव मुख्यत्वमुक्तं सङ्गच्छते। *प्रथमान्तार्थमुख्येति*। कालाद्यतिरिक्तत्वे सति आख्यातार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन आख्यातपदज्ञानजन्यशाब्दबुद्धित्वावच्छिन्नम्प्रति विशेष्यतासम्बन्धेन प्रथमान्तनामपदजन्यान्यविशेषणीभूतार्थविशेष्यकोपस्थितिः कारणमिति कार्यकारणभावो बोध्यः। *अनद्यतन इति*। अतीतायाः रात्रेः पश्चार्धेन अगामिन्याःपूर्वार्धेन च सहितः कालोऽद्यतनः, तद्भिन्नोऽनद्यतन इति वृत्तिः। अतीतरात्रेरन्त्ययामेन आगामिरात्रेराद्ययामेन च सहितो दिवसोऽद्यतन इति "लण्" सूत्रे कैयटः। एवम् अनद्यतने भविष्यति लुट्, भविष्यत्सामान्ये लृट् इत्यादि तदनुशासनादितो बोध्यम्। *वर्तमानेति*। वर्तमाने ध्वंसः, वर्तमानश्चासौ ध्वंसश्चेति उभयविधसमासस्य सम्भवत्वेन वर्तमानक्षणवृत्तिर्यो ध्वंसः—अतीतक्रियाध्वंसः, वर्तमानो यो ध्वंस इति वा तत्प्रतियोगिनी तादृशक्रिया तदुत्पत्तिकत्वमतीतकालस्येति लक्षणसमन्वयः। *चिरोत्पन्न* इति। उत्पत्तिपदोपादानेन वर्तमानक्षणवृत्तिध्वंसप्रतियोगिन्या अतीतक्रियाया उत्पत्तिर्यस्मिन् इति बहुव्रीहिणा यस्मिन्काले तादृशक्रियोत्पत्तिः स एवातीतकालो लक्ष्यते। अन्यथा वर्तमानक्षणवृत्तिध्वंसोऽतीतक्रियाध्वंसः, तत्प्रतियोगित्वस्यातीतक्रियायां सत्वेऽपि क्रियाया अपि कालत्वेन सामान्यातीतेऽपि वर्तमानत्वात्तादृशप्रयोगः स्यादिति भावः। *परोक्षत्वमिति*। परोक्ष-

"णलुत्तमो वा" इति ज्ञापकात् उत्तमपुरुषस्तत्र स्यादिति वाच्यम्। 'सुप्तोऽहं किल विललाप' 'मत्तोऽहं किल विचचार'इत्यादौ चित्तविक्षेपादिना पारोक्ष्यमुपपाद्य तत्र सूत्रसार्थक्यसम्भवात्। तत्र च परोक्षत्वेन पारोक्ष्यसादृश्ये तात्पर्यम्। 'चक्रे सुबन्धुः'इति तु न लिट्प्रयोगोऽपि तु तिङन्तप्रतिरूपको निपातः।

लुङ्लृटोस्तु भविष्यत्कालः। भविष्यत्त्वं वर्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वम्। उत्पत्तौ च देशविशेषः कालविशेषश्चाधिकरणत्वेनान्वेति। गृहे घटो भविता अद्य घटो भविष्यतीत्यादौ धातुनोत्पत्तिः प्रत्याय्यते, वर्तमानप्रागभावप्रतियोगित्वमाश्रयत्वं च प्रत्ययेन। गृहाधिकरणकवर्त्तमानप्रागभावप्रतियोग्युत्पत्त्याश्रयो घटः, अद्यतनप्रागभावप्रतियोग्युत्पत्त्याश्रयो घट इत्यन्वयबोधात्। वर्त्तमानप्रागभावप्रतियोगित्वमात्रस्य लुडाद्यर्थत्वे श्वो गृहे समुत्पद्य परश्वः प्राङ्गणं गमिष्यति मैत्रे परश्वः प्राङ्गणे मैत्रो भविष्यतीति प्रसङ्गः।

केचित्तु देशविशेषः कालविशेषश्च प्रागभावे प्रतियोगिनि चान्वेति। परश्वः प्राङ्गणे मैत्रो भविष्यतीत्यस्य परश्वोवृत्तिः प्राङ्गणवृत्तिर्यः प्रागभावस्तत्प्रतियोग्युत्पत्त्याश्रयः परश्वोवृत्तिः प्राङ्गणवृत्तिर्मैत्र इति बोधः। तेन नोक्तातिप्रसङ्गः। एतेन श्वोभाविनि घटे अद्य भविष्यतीति प्रसङ्गो निरस्त इत्याहुः॥

नङ्क्ष्यतीत्यादौ वर्त्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वं प्रतियोगित्वं च प्रत्ययार्थः। श्वो घटो नङ्क्ष्यतीत्यादौ श्वोवृत्तिः वर्त्तमानप्रागभावप्रतियोगिनी योत्पत्तिस्तदाश्रयनाशप्रतियोगी घट इत्यन्वयबोधः। यत्त्वत्र वर्त्तमा-

---

त्वञ्च—वक्तुः साक्षात्काराविषयत्वम्। तेन स्वक्रियायाः स्वप्रत्यक्षेन नाहं चचार इत्यादिप्रयोगोऽसाधुरेव। ननु "ख्यातेन किरणावलीमुदयनः" इत्यादेः का गतिरिति चेत्? तत्र परोक्षत्वारोपेण समाधेयमिति दिक्। *पारोक्ष्यसादृश्ये इति*। अत एव "मत्तोऽहं किल विललाप" विचचार' इत्यादौ पारोक्ष्यसादृश्याल्लिट् साधुरिति तात्पर्यम्।

*वर्तमानप्रागभावेति*। वर्तमानकालिको यः प्रागभावस्तत्प्रतियोगिन्युत्पत्तिर्यस्येति बहुव्रीहिरिति भावः। *उत्पत्तिरिति*। 'भू सत्तायाम्' इतिपठितस्यापि भूधातोरुत्पत्तिरर्थो धातूनामनेकार्थत्वाद्बोध्यम्। *प्रतियोगित्वमात्रस्येति*। वर्तमानप्रागभावप्रतियोगित्वस्य क्रियारूपकाले सत्वात्तादृशप्रयोगः स्यात्। उत्पत्त्यन्तलुडाद्यर्थत्वे तु वर्तमानप्रागभावप्रतियोग्युत्पत्तिरतीतक्रियायाः परश्वो नास्तीति न तादृ-

नप्रागभावप्रतियोगित्वमेव प्रत्ययार्थ इति, तन्न। (१)श्वोभाविनाशके घटे अद्य नङ्क्ष्यतीति प्रसङ्गात्।

पक्ष्यतीत्यादौ आद्यपाकव्यक्तिप्रागभावगर्भमेव भविष्यत्त्वम्, पक्वानित्यादौ चरमपाकव्यक्तिध्वंसगर्भमेव भूतत्वं भासते। तत्तत्समभिव्याहारस्य तादृशबोधे हेतुत्वात्। तेन पाकमध्ये कस्याश्चित्पाकव्यक्तेरनुत्पादेऽपि कस्याश्चिदतीतत्वेऽपि न पक्ष्यति पक्वानित्यादिप्रयोगः।

लिङो विधिराशीश्चार्थः। यजेतेत्यादौ विधिः, आशीस्तु भूयादित्यादौ। सा च शुभाशंसनं तदिच्छेति यावत्। लोटस्तु विधिरनुमतिर्वा। गच्छत्वित्यत्रानुमतिविषयगमनानुकूलकृतिमानिति बोधस्यानुभविकत्वात्।

विधिः प्रवर्त्तनेति भाट्टाः। (२)लिङ्निष्ठो व्यापारः पदार्थान्तरम्, (३)लि-

---

शप्रयोग इति भावः। *आद्यपाकव्यक्तीति*। विक्लित्युत्पादकसिद्धासिद्धफूत्काराधःश्रयणान्तक्रियाकलापरूपोत्पादनापरपर्यायो व्यापारविशेषः पाकः साध्यत्वेन प्रतीयमानो धात्वर्थः। अत एव च "गुणभूतैरवयवैः समूहः क्रमजन्मनाम्। बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते" इति। "यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते। आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते" इत्यभियुक्तैरुक्तम्। ततश्चाद्यपाकपदेन फूत्कारस्य चरमपाकपदेनाधःश्रयणस्य च ग्रहणमवोध्यम्। *तत्समभिव्याहारस्येति*। तत्तद्धातुसमभिव्याहृतलृडादेरित्यर्थः। *लिङो विधिरिति*। "विधिनिमन्त्रणामन्त्रण" इति "आशिषि लिङ्लोटौ" इतिचाभयसूत्राभ्यां लिङस्तादृशार्थद्वये शक्तिबोधनात् द्वयोरप्युक्तार्थयोरुपस्थितिः। तत्रेयान्विशेषः–शप्समभिव्याहारे विधेः तदितरत्र 'यास्त' 'सीस्त' इत्यन्यतरसमभिव्याहारेचाशिषश्च तात्पर्यनिश्चयवशाद्बोधवैलक्षण्यमत्र बोध्यम्। *तदिच्छेति*। शुभविषयिणीच्छेत्यर्थः। *विधिरनुमतिर्वेति*। "लोट् च" इत्यनेन विध्यादौ तद्विधानात्, अनुमतिः—अनुज्ञा, अत्राप्युक्तार्थस्यार्थान्तरोपलक्षणत्वमुह्यम्।

---

(१) श्वोभावी नाशो यस्य तस्मिन्नित्यर्थः।

(२) यद्यपि लोके आज्ञादिरूपो ऽभिप्रायविशेष एव प्रवर्त्तना, तथापि वेदे पुरुषाभावाच्छब्दनिष्ठ एव स आश्रीयते इति भावः।

(३) क्लृप्तेन लिङ्पदज्ञानेनैवोपपत्तौ पदार्थान्तररूपव्यापारकल्पनाया अनुचितत्वात्। तथाहि—प्रवृत्तिहेतुव्यापारः प्रवर्तना। विधिशब्दो हि पुरुषप्रवृत्तिरूपार्थभावनां दशलकारसाधारणाख्यातत्वेन बोधयति, ज्ञातैव च सा अनुष्ठातुं शक्यत इति भवति

रूपदज्ञानमेव वा । तस्य प्रवर्तनात्वेन(१) ज्ञानं शब्दाधीनप्रवृत्तौ कारणम् । लिङश्रवणे आचार्यो मां प्रवर्तयतीति ज्ञानाद्गवानयनादौ प्रवृत्तेः आचार्यनिष्ठप्रवर्तनात्वभिप्रायविशेष एवेत्याहुः । तन्न । स्तनपानादिप्रवृत्ताविष्टसाधनताज्ञानस्य हेतुताया आवश्यकत्वात् तत एवोपपत्तौ प्रवर्त्तनाज्ञानस्य हेतुत्वे (२)मानाभावात् । स्वर्गकामो यजेतेत्यादौ प्रवर्त्तनाविषया यागकरणिकास्व-

---

*भाट्टाः*—मीमांसकाः । *तस्येति* । प्रवर्तनात्वस्य अयं मां प्रवर्तयतीति प्रतीतिसाक्षिकस्य प्रवर्तकपुरुषाभिप्रायेष्विव शब्दव्यापारे ऽपिसत्वाल्लोकवेदयोरुभयोः सङ्ग्रहः । *स्तनपानादीति* । आद्यक्षणे स्तनपाने बालस्य प्रवृत्त्यनुकूलव्यापाररूप-

---

विधिशब्दस्य ज्ञानद्वारा प्रवृत्तिहेतुत्वम् । तस्य च प्रवृत्तिज्ञानद्वारा प्रवृत्तिहेतुत्वं "विधिशब्दः प्रवृत्तिबोधहेतुशक्तिमान्" इत्येवं ज्ञातस्यवेति तादृशशक्तिमत्त्वेन ज्ञानमेव तस्य प्रवृत्तिहेतुर्व्यापार इति स एव प्रवर्तनाख्यां लभते । ज्ञानातिरिक्तव्यापारकल्पने मानाभावादिति भावः ।

(१) प्रवर्तनात्वेनैव ज्ञानस्य प्रवृत्तिं प्रति कारणत्वान्न लोकवेदयोरननुगमः । लिङ्श्रवणे अयं मां प्रवर्तयतीतिप्रतीतिसाक्षिकस्य प्रवर्तनात्वस्य आज्ञादिष्विव शब्दव्यापारेऽपि सत्त्वादिति भावः ।

(२) इष्टसाधनत्वमपि प्रेरणात्वेनैव शक्यं, न स्वरूपतः । प्रेरणात्वापेक्षया तस्य गुरुत्वात् । इष्टत्वांशं विहाय साधनत्वमात्रस्य वाच्यत्वे च आख्यातत्वांशोपस्थितप्रवृत्त्या सह समानाभिधानश्रुत्या साधनत्वान्वयसम्भवे पदान्तरोपस्थापितस्वर्गेण सह समभिव्याहाररूपवाक्येन तदन्वयासम्भवात् प्रवृत्तिसाधनत्वरूपप्रेरणात्वे एव पर्यवसानमिति इष्टसाधनत्वं न पदार्थः, किन्तु वाक्यार्थः । तथाहि—प्रवर्तनाविषयीभूताऽऽर्थभावना किम्भावयेदिति भाव्याकाङ्क्षायां समानपदोपात्तमपि धात्वर्थमपुरुषार्थत्वाद्भाव्यतयाऽन्वयायोग्यं विहाय भिन्नपदोपात्तमन्यविशेषणमपि स्वर्गं कामपदसम्बन्धात् पुरुषार्थतयावगतं साध्यत्वान्वययोग्यं भाव्यत्वेनाश्रयति । अपुरुषार्थकर्मिकायास्तस्याः प्रवर्त्तनासाध्यत्वानुपपत्तेः । एवञ्च स्वर्गभावनासाधनत्वात्स्वर्गरूपेष्टसाधनत्वमपि प्रवर्तनायाः सिध्यति । पुरुषप्रवृत्तिरूपार्थभावना च यागव्यापारं विना स्वर्गं साधयितुं नालमिति यागस्य स्वर्गसाधनत्वमाक्षिप्यते । न तु यागस्य स्वर्गसाधनत्वं वाक्यप्रमाणगम्यम् । यजधातोरकर्मकत्वेन तत्र द्वितीयान्तस्वर्गपदार्थस्य कर्मत्वेनान्वयायोगात् । तस्मात् फलसाधनत्वस्य प्रवर्तनात्वेनैव वाच्यतेत्यादिकं मण्डनमतसमर्थनं वैयाकरणादिसम्मतमन्यतो विस्तरेणावगन्तव्यम् । मानाभावादिति तु नैयायिकमतनिरूपणप्रस्तावे ग्रन्थकारेणोक्तमिति तत्कथनं वैयाकरणसंमतमिति न भ्रमितव्यम् ।

र्गकर्मिका भावनेति बोधस्य परैरभ्युपगमात् प्रवर्तनाविषयत्वमात्रज्ञानात् प्रवृत्त्यनुपपत्तेरावश्यकस्वर्गसाधनत्वादिज्ञानादेव तत्र प्रवृत्तेः।

कार्यं विधिरिति (१) प्राभाकराः। स्वर्गकामो यजेतेत्यादौ स्वर्गकामनियोज्यकं यागविषयकं कार्यमिति प्राथमिको बोधः। सनियोज्यकं यागविषयकं स्थायिस्वर्गसाधनं कार्यमिति द्वितीयः। स्वर्गकामनियोज्यको यागः स्वर्ग-

---

प्रवर्तनाया असम्भवेन जन्मान्तरगृहीतेष्टसाधनतास्मरणादेव प्रवृत्तेरिति भावः।

*कार्यं विधिरिति*। साक्षात्कृतिसाध्यं हि कार्यम्। अतः फले नातिव्याप्तिः। यागस्य लघु विनाशित्वेन कालान्तर्भावि स्वर्गं प्रति कारणत्वासम्भवात्। अतोऽपूर्वरूपं कार्यं लिङर्थमितिविनिश्चित्य प्रथमबोधानन्तरमपूर्वोपस्थितौ द्वितीयेन बोधेन

---

(१) प्राभाकरा इति। ते हि प्रवृत्तिं प्रति कार्यताज्ञानस्य कारणत्वमभ्युपगच्छन्ति। तथाहि—कार्यताज्ञानं द्विविधम्-मयेदं कर्तुं शक्यते इत्यवंरूपमेकम्, मयेदमवश्यं कार्यमित्येवंरूपं द्वितीयम्। तत्राद्यं पदार्थयोग्यतागम्यमिति न प्रवृत्तौ कारणम्। द्वितीयमिष्टसाधनत्वादिज्ञानजन्यमिति चिकीर्षाद्वारा प्रवृत्तिहेतुः। अत एव इष्टसाधनत्वेनाज्ञाते मध्वन्नभोजने, बलवदनिष्टसाधनत्वेन ज्ञाते विषसंयुक्तान्नभोजने च न प्रवृत्तिः। निरुक्तस्य कार्यताज्ञानस्य इष्टसाधनत्वज्ञानाद्यभावेऽजननात्। प्रवृत्तिं प्रति इष्टसाधनत्वज्ञानादीनां त्रयाणां कारणत्वकल्पनापेक्षया लाघवेन उक्तकार्यताज्ञानस्यैव चिकीर्षाद्वारा कारणत्वकल्पनं समुचितमेव। प्रकरणादिहेतुकतात्पर्यज्ञानस्य फलभूतशाब्दबोधकारणत्वकल्पनवत्। तस्मात् कार्यताज्ञानमेव प्रवर्तकमिति तदेव लोके विध्यर्थः।

वेदे तु कार्यं विध्यर्थः। तृप्तिकामः पचेदित्यादौ लोके पाकादौ तृप्तिरूपफलसाधनत्वस्य लौकिकप्रमाणगम्यत्वेन तेन रूपेणावगते पाकादौ काम्यसाधनताज्ञानाधीनकार्यताज्ञानवत्त्वरूपनियोज्यत्वविशिष्टान्वये कार्यत्वान्वयो यथा भवितुमर्हति, तथा स्वर्गकामो यजेतेत्यादौ वेदे यागादौ कार्यत्वान्वयो न भवितुमर्हति। क्षणिकयागे काम्यस्वर्गसाधनत्वरूपयोग्यताऽभावेन तज्ज्ञानाधीनकार्यताज्ञानवत्त्वरूपनियोज्यत्वविशिष्टान्वयरूपाया योग्यतायाः कार्यत्वान्वयप्रयोजिकाया अभावात्। अतोऽपूर्वरूपकार्यं विध्यर्थमङ्गीकृत्य स्वर्गकामनियोज्यकं यागविषयकं कार्यमिति प्रथमबोधोत्तरमपूर्वोपस्थितौ तत्र द्वितीयबोधेन स्थायित्वस्वर्गसाधनत्वयोः ग्रहे तद्द्वारा यागे स्वर्गसाधनत्वग्रहात् तत्र कार्यत्वबोध उपपादनीयः। अत एव च अतीन्द्रियस्य तस्य कार्यत्वोपपत्तिः। चतुर्थबोधस्तु प्रथमप्रतीतकृतेराश्रयान्वयलाभार्थम्। पञ्चमस्तु यागे असाधारणप्रवृत्त्युपपादनार्थमित्यलम्।

कामकार्य्य इति तृतीयः। स्वर्गकामो यागकर्तेति चतुर्थः। अहं स्वर्गकामोऽतो यागो मत्कृतिसाध्य इति पञ्चमः। न च प्रथम एव स्वर्गकामकार्य्यो याग इति बोधोऽस्तु, तथा च कार्यत्वे एव शक्तिर्न कार्ये इति वाच्यम्। यागादिक्रियायां नियोज्यान्वयं विना कार्यत्वान्वयानुपपत्तेः। नियोज्यत्वं इह क्रियानिष्ठकाम्यसाधनताज्ञानाधीनमत्कार्यमितिबोधवत्त्वम्। तत्तु स्वर्गकामनाविशिष्टे योग्यताऽवच्छेदकतया भासते। घटेन जलमाहरेत्यत्र घटे छिद्रेतरत्ववत्। न च यागे स्वर्गसाधनत्वज्ञानं विनेदृशं नियोज्यत्वं भातुमर्हति। न वा यागे स्वर्गसाधनत्वं प्रथममेव शक्यं ज्ञातुम्। तद्धि साक्षात् परम्परया वा। नाद्यः। आशुविनाशिनो यागस्य कालान्तरभाविनि स्वर्गरूपफले साक्षादहेतुत्वात्। नान्त्यः। परम्पराघटकापूर्वानुपस्थितेः। अतो यागविषयकं कार्यमिति प्रथमबोधादपूर्वोपस्थितौ तद्द्वारा यागे स्वर्गसाधनत्वग्रहात् तत्र कार्यत्वबोध इत्युक्तम्। नियोज्यत्वं च पदानुपस्थितमपि योग्यतया शाब्दबोधे भासते द्वारमित्यत्र पिधेहीतिवत्।

प्रवर्तकज्ञानविषयो विधिरिति नैयायिकाः। प्रवर्तकं च कृति साध्यत्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वानां ज्ञानम्। अतस्तेषु लिङ्शक्तित्रयम्। सुमेरुशृङ्गाहरणनिष्फलाचरणमधुविषसंपृक्तान्नभोजनेषु प्रवृत्तिवारणाय यथासंख्यं त्रयाणामेव ज्ञानं प्रवर्तकम्।

---

स्थायित्वस्वर्गसाधनत्वग्रहः। तादृशापूर्वद्वारा च यागे स्वर्गसाधनत्वग्रहः। प्रथमबोधविषयीभूतकृतेराश्रयान्वयलाभाय तुरीयबोधः प्रदर्शितः। पुरुषाणामप्रेरणेनैव अवश्य कर्तव्यबुद्ध्या स्वयं प्रवृत्त्युत्पादनाय पञ्चमो बोध इति ग्रन्थे पञ्चबोधप्रदर्शनमिति तात्पर्यम्। *च्छिद्रेतरत्ववदिति*। बाधज्ञानस्य विषयतायां सङ्कोचकतया सच्छिद्रेण घटेन जलाहरणमसम्भवीति बाधज्ञाने सति उक्तवाक्ये घटपदप्रयोज्यकरणताख्यविषयतायां यथा सच्छिद्रेतरत्वावच्छिन्नत्वं भासते, तथेह नियोज्यत्वमपीत्यर्थः। *अपूर्वोपस्थिताविति*। तत्पदजन्यतदर्थोपस्थितौ यथा तत्पदनिष्ठशक्तिग्रहजन्यसंस्कारो हेतुः। एवं स्वर्गादीष्टम्प्रति साक्षात्कारणं यागजन्यापूर्वम्, न तु याग एवेति भावः।

नैयायिकाभिमतलिङर्थमाह—*प्रवर्तकेति*। प्रवृत्तिजनकमित्यर्थः। कृतिसाध्यत्वेति*। एवं च न सुमेरुशृङ्गाहरणे प्रवृत्तिः। तथैव न ष्फिलजलताडने प्रवृत्तिः। अनिष्टत्वात्। नापि मधुविषसम्पृक्तान्नभोजने, बलवदनिष्टानुबन्धित्वादिति भावः।

यत्तु समुदिते शक्तिरेकैवेति। तन्न। विशेष्यविशेषणभावे विनिगमकाभावेन त्रिष्वेव पृथक्शक्तेः। एवञ्च स्वर्गकामो यजेतेत्यादौ स्वर्गकामीयो यागः कृतिसाध्यः, इष्टसाधनं बलवदनिष्टाननुबन्धीचेति बोध इत्येके।

वस्तुतो नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नतया तादृशयागानुकूलकृतिमान् स्वर्गकाम इत्येव बोधः। कृतिसाध्यत्वं च प्रवृत्तिसाध्यत्वम्। अतो न समुद्रतरणादौ प्रवृत्तिः। इष्टसाधनत्वं चेष्टनिष्ठसाध्यतानिरूपकत्वमतो न तृप्तस्य भोजने प्रवृत्तिः। बलवदनिष्टाननुबन्धित्वंतु स्वजन्येष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वम्। नहि सुखं दुःखैर्विना लभ्यते इति न्यायेन नान्तरीयकं किञ्चिद् दुःखमिष्टोत्पत्ताववश्यं भावि तदतिरिक्तदुःखराहित्यमेव तत्त्वम्।

'ब्राह्मणो न हन्तव्यः' इत्यादौ नञः कृतिसाध्यत्वेष्टसाधनत्वनिषेधे स्वारस्याभावात्तेन बलवदनिष्टाननुबन्धित्वनिषेधाद् ब्राह्मणवधो बलवदनिष्टजनक इत्यर्थः पर्य्यवस्यति। एतेन समुदिते लिङः शक्तिकल्पनमपास्तम्।

यद्यपि प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययस्येति व्युत्पत्त्या नञर्थे बलवदनिष्टाननुबन्धित्वान्वयोऽसम्भवी, तथाप्यन्यथाऽनुपपत्त्या एतदतिरिक्तस्थले एव सा व्युत्पत्तिः। अत एव नातिरात्रे षोडशिनं गृह्णातीत्यादौ षोडशिग्रहणाभाव इष्टसाधनमिति बोध इति दीधितिकृतः। न हन्तव्य इत्यादौ हननाभावविषयकं कार्यमिति बोध इति गुरवः। ननु पचतीत्यादौ लडाद्यर्थवर्त्तमानत्वादेर्यत्ने एवान्वयान्न सा व्युत्पत्तिः। मैवम्। यत्र प्रत्ययत्वं तत्र

---

*शक्तिरेकैवेति*। फलव्यापारयोर्धातोरिव लिङोऽपि उक्तार्थत्रये एकैव शक्तिःस्वीक्रियताम्, खण्डत्रये चास्यास्त्रिषूक्तेष्वर्थेषु च शक्तिबाहुल्ये शक्यतावच्छेदकबाहुल्येन गौरवञ्च परिहीयताम्। विशेष्यविशेषणभावश्च तात्पर्यनिश्चयविशेषबलाद्भविष्यतीति न तत्रापि वैषम्यम्। स्वर्गकामीय इति। स्वर्गकामपुरुषसम्बन्धीत्यर्थः। सम्बन्धिता च स्वनिष्ठकर्तृतानिरूपकत्वसम्बन्धेन बोध्या। *स्वजन्येति*। स्वं यागः, तज्जन्येष्टोत्पत्तौ, स्वर्गे नान्तरीयकोपमादिजन्यदुःखात् अधिकदुःखाजनकत्वमितिसमन्वयो बोध्यः।

*प्रकृत्यर्थान्वितेति*। इमामेव व्युत्पत्तिमर्थतः पठन्ति 'प्रत्ययार्थः प्रकृत्यर्थेनैवान्वेति' इति। अत एव पचन्तं पश्य पचमानं पश्येत्यत्र द्वितीयार्थकर्म्मत्वैकत्वयोर्द्धात्वर्थेऽन्वयमुररीकृत्य केवलपाकदर्शनादेर्न बोधः, किन्तु शत्राद्यर्थ एवान्वयेन पाककर्तृद-

प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्याप्तेः। यः प्रत्ययार्थः स प्रकृत्यर्थस्य विशेष्यतया भासते इति व्याप्तेश्च ॥

लेटस्तु यच्छन्दासमभिव्याहृतस्यैव विधिरर्थः समिधो यजतीत्यादौ विधिप्रत्ययात्। देवांश्च याभिर्यजते ददाति च य एवं विद्वानमावास्यां यजते इत्यादौ तदप्रत्ययादिति ॥

लृङ्स्तु भूतत्वं क्रियातिपत्तिश्चार्थः। अतिपत्तिरनिष्पत्तिरापादनारूपा। सा च शक्या। सा चापादना तर्कः। तर्कत्वं च मानसत्वव्याप्यो जातिविशेषः। एधांश्चेदलप्स्यत ओदनमपक्ष्यत् इत्यादौ एधकर्मको भूतत्वेनापादनाविषयो यो लाभस्तदनुकूलकृतिमान् ओदनकर्मको भूतत्वेनापादनाविषयो यः पाकस्तदनुकूलकृतिमांश्चेति बोधः। भविष्यति क्रियातिपदनेऽपि लृङ्। यदि सुवृष्टिरभविष्यत्तदा सुभिक्षमभविष्यदिति प्रयोगदर्शनात्। भूतत्वभविष्यत्त्वयोर्बोधनियमस्तात्पर्यात्। यदि स्यादित्यादौ लिङोऽप्यापादनायां शक्तिः। यदि निर्वह्निस्यात्तर्हि निर्धूमस्यादित्यादौ तस्या एव प्रतीतेः। लाघवेन स्थानिनां वाचकत्वात् सङ्ख्यापि लकारार्थः ॥

इति लकारार्थनिर्णयः ॥



---

र्शनदशायामेव तादृशप्रयोग इति दिक्। *यः प्रत्यर्थ इति*। प्रकृत्यर्थनिष्ठविशेषणतानिरूपितविशेष्यतावान्प्रत्ययार्थ इति फलितोऽर्थः। * तर्क इति *। व्याप्यारोपेण व्यापकारोपस्तर्क इति भावः। आरोपश्चाहार्यज्ञानम्, तच्चबाधकालीनेच्छाजन्यज्ञानरूपम्। यथा—निर्वह्निः स्यान्निर्धूमः स्यादिति। अत्र व्याप्यस्य वह्न्यभावरूपस्य आरोपेण व्यापकस्य धूमाभावस्यारोपः। प्रकृते च एधाभावात् ओदनाभाव आरोप्यत इति भावः। *सुवृष्टिश्चेदिति*। अत्र सुभिक्षभवने सुवृष्टिभवनं हेतुरतो हेतुहेतुमद्भावे क्रियाया असिद्धौ धातोर्लृङ्सिद्धस्तेन सुवृष्टिभवनहेतुकं सुभिक्षभवनमिति बोधः। * तात्पर्यादिति*। तात्पर्यनिश्चयवशादित्यर्थः।

इत्यर्थदीपिकायां लकारार्थविचारः।



## अथ कारकाणि निरूप्यन्ते ॥

कर्ता कर्म च करणं सम्प्रदानं तथैव च ।
अपादानाधिकरणमित्याहुः कारकाणि षट् ॥

तत्र क्रियानिष्पादकत्वं कारकत्वम् । तच्च कर्त्रादीनां षण्णामपि । तत्र प्रकृतधातुवाच्यव्यापाराश्रयत्वं कर्तृत्वम् ।

धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते ।

इति हर्युक्तेः। अन्यकारकनिष्ठो व्यापारस्तु न प्रकृतधातुवाच्यः। यथा वह्निना पचतीत्यत्र वह्निनिष्ठः प्रज्वलनादिः। अन्यकारकनिष्ठव्यापाराश्रयस्य कर्तृत्ववारणाय धातुवाच्येति। तत्रोक्ते तु कारकमात्रे प्रथमैव। तिङ्समानाधिकरणे प्रथमा अभिहिते प्रथमेति वार्तिकद्वयात्। सूत्रमते तु कर्तृक-

---

*अथेति*। अत्राथशब्दो मङ्गलार्थः। *निरूप्यन्त इति*। स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धनानाधर्मप्रकारकज्ञानानुकूलो व्यापारो निरूपयतेरर्थः।

*क्रियानिष्पादकत्वमिति*। निष्पादयति—उत्पादयतीति—निष्पादकः—जनकः। तथाच क्रियाजनकत्वम्, जनकत्वेन क्रियान्वयित्वं वा कारकत्वम्बोध्यम्। अन्ये तु कर्तृप्रत्ययसमभिव्याहारे व्यापारतावच्छेदकसम्बन्धेन धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयतद्धात्वर्थाश्रयत्वम्—कर्तृत्वम्। कालिकसम्बन्धेन व्यापाराश्रयेऽतिप्रसङ्गवारणाय व्यापारतावच्छेदकसम्बन्धेनेति। ग्रामं गच्छतीत्यादावुत्तरसंयोगात्मके फले तादृशधात्वर्थत्वाभावान्न तदाश्रयेऽतिप्रसङ्गः। पक्वस्तण्डुलो देवदत्तेनेत्यादौ फलस्य विशेष्यत्वेन देवदत्तेऽतिव्याप्तिपरिहाराय कर्तृप्रत्ययसमभिव्याहार इति लक्षणसमन्वयो बोध्यः। षट्सु कारकेषु प्रथमोपस्थितत्वात्कर्तारं लक्षयति—*प्रकृतधात्विति*। प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रयत्वमिति यावत्। तेन प्रयोज्यप्रयोजकानुक्तकर्तॄणां सर्वेषां संग्रहः। 'माषेष्वश्वं बध्नाति' इत्यत्र तु गलाधः संयोगानुकूलव्यापाराश्रयत्वेन अवश्यकर्तृत्वेऽपि प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रयत्वाभावान्न कर्तृत्वापत्तिरिति दिक्।

*धातुनोक्तेति*। धातुनोक्तक्रिये कारके कर्तृता नित्यमिष्यते, इति हरिपद्यपद्योजनेति भावः। अत एव यदा यदीयो व्यापारो धातुनाऽभीधीयते; तदा स कर्तेति, स्थाली पचति, अग्निः पचति, एधांसि पचन्ति, तण्डुलः पच्यते स्वयमेवेत्यादि सङ्गच्छते। *धातु

र्माद्यर्थकप्रत्ययेन कर्त्रादेरुक्तत्वात् प्रथमायाः प्रातिपदिकार्थ एवार्थः । तस्य चाख्यातार्थकर्त्रादिनाऽभेदान्वयेन प्रथमार्थस्य कारकत्वम् । अत एवाख्यातार्थद्वारकक्रियान्वयात्(१) तदर्थस्य क्रियाजनकत्वादस्याः कारकविभक्तित्वेन भाष्ये व्यवहारः । चैत्रो भवतीत्यत्र एकत्वावच्छिन्नचैत्राभिन्नकर्तृकं भवनमिति बोधः । आख्यातकृदादिना कर्त्रादेरभिधानेऽपि प्रथमयाऽनुद्भूतकर्तृत्वादिशक्तिः प्रतिपाद्यते इति तात्पर्यम् । कर्माख्याते तु चैत्रेण ग्रामो गम्यते इत्यत्र चै-

---

वाच्येतीति* । प्रकृतधात्वर्थप्रधानीभूतेत्यर्थः । *एकत्वावच्छिन्नेति* । आख्यातार्थैकत्वसंख्यायाः कर्तर्यन्वयात् वैयाकरणमते व्यापारमुख्यविशेष्यकबोधाच्चेति भावः । कर्माख्याते तु तृतीयायाः कर्तरि विधानात्कर्तृत्वमर्थः । तत्र चैत्रस्याभेदसंसर्गेणान्वयः, कर्तुश्च वृत्तित्वसम्बन्धेन धात्वर्थव्यापारे तस्य जन्यत्वसम्बन्धेन संयोगरूपफले तत्रैव निष्ठत्वसम्बन्धेन ग्रामादिकर्मणः ग्रामे चाख्यातार्थसंख्याया अन्वयो बोध्यः । *चैत्रकर्तृकेति* । अत्रेदमवधेयम्-चैत्रेणेतिकर्तृतृतीयायाः कर्त्रर्थः । तेन

---

(१) ननु परम्परयाक्रियान्वितस्य कारकत्वे राज्ञः पुरुषमानयेत्यादौ राजादीनामपि कारकत्वापत्तिः । न च क्रियानिष्ठविषयताविशिष्टविषयताश्रयत्वं कारकत्वम् । विषयतावै० साक्षात् परम्परया वा स्वनिरूपितत्वम्, स्वनिरूपितविषयतासामानाधिकरण्यम् एतदुभयसम्बन्धेन । तथाच-राजनिष्ठविषयतायाः परम्परया क्रियाविषयतानिरूपितत्वेऽपि क्रियाविषयतानिरूपितविषयतासामानाधिकरण्याभावान्न राज्ञः कारकत्वापत्तिरिति वाच्यम् । सुन्दरस्य राज्ञः पुरुषमानयेत्यादौ सुन्दरपदार्थस्य परम्परया क्रियाविषयतानिरूपितराजपदार्थनिष्ठविषयतासमानाधिकरणसुन्दरत्वावच्छिन्नविषयताश्रयत्वेन कारकत्वापत्तेः । साक्षात् क्रियाविषयतानिरूपितविषयतासामानाधिकरण्यनिवेशेऽपि चैत्रेण स्वस्य पुत्रो दृश्यते इत्यत्र चैत्रस्य स्वपदार्थत्वेनापि कारकत्वापत्तिः, सुन्दरश्चैत्रो गच्छतीत्यादौ सुन्दरपदार्थस्य कारकत्वानापत्तिश्चेति चेन्न । कारकत्वव्याप्यकर्तृत्वकर्मत्वादिसम्बन्धेतरसम्बन्धाघटितपरम्परया क्रियाविषयतानिरूपितविषयताश्रयस्यैव कारकत्वस्वीकारात् । चैत्रो गच्छतीत्यादौ आख्यातार्थाश्रये चैत्रस्य विशेषणत्वेऽपि अभेदस्य सम्बन्धत्वाभावेन तस्य सम्बन्धानवच्छिन्नतया तद्घटितपरम्परायाः कर्मत्वादिसम्बन्धेतरसम्बन्धाघटितत्वात्कारकत्वम् । चैत्रेण स्वस्य पुत्रो दृश्यते इत्यादौ तु स्वपदार्थस्य पुत्रपदार्थे निरूपितत्वसम्बन्धेन विशेषणत्वात् तद्घटितपरम्परायाः कर्तृत्वादिसम्बन्धेतरसम्बन्धघटितत्वान्न कारकत्वम् । कटादेरधिकरणस्यापि परम्परया क्रियान्वयेऽपि तद्घटितपरम्परायाः कर्तृत्वादीतरसम्बन्धाघटितत्वान्न कारकत्वानुपपत्तिरिति दिक् ।

त्रकर्तृकव्यापारजन्य एकत्वावच्छिन्नग्रामाभिन्नकर्मनिष्ठः संयोग इति बोधः। सम्बोधनप्रथमार्थस्यापि अनुवाद्यत्वेनोद्देश्यतया युष्मदर्थाभेदेन(१)विधेयक्रि-

---

सह चैत्रस्याभेदः, वृत्तित्वञ्च संसर्गतया भासते। धातोस्तु फलव्यापारयोः खण्डशः शक्तिः। अत एव तयोर्विशेषणभावव्यत्यासः। एवञ्च चैत्राभिन्नकर्तृवृत्तिव्यापारजन्ये-त्यर्थ इति भावः। *सम्बोधनेति*। "सम्बोधने च" इतिविहितप्रथमायास्तु सम्बोधनमर्थः। प्रातिपदिकार्थापेक्षया तस्याधिक्येन भावात् पूर्वसूत्राविषयत्वात् तत्सूत्रा-

---

(१) विधेयक्रियायामिति। "सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः। प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते"॥ इति हर्युक्तेविधेयक्रियायामेवसम्बोधनप्रथमान्तार्थान्वयलाभात प्रवृत्तिनिवृत्त्योश्च तत्फलत्वात् प्रवर्तनादिविषयक्रियायामेव तदन्वयः। अत एव व्रजानि देवदत्तेत्यादौ जानीहीत्यादिः शेष आवश्यकः। अस्मत्पदार्थकर्तृकव्रजनस्य देवदत्तोद्देश्यकप्रवर्तनाविषयत्वाभावात्। विधेयक्रियायामन्वयोऽपि लोडर्थप्रवर्तनान्वयद्वारकः। प्रवर्तनायामुद्देश्यतानिरूपकत्वसम्बन्धेन प्रकृत्यर्थान्वयः। तस्याश्च विषयतासम्बन्धेन धात्वर्थे। अभिमुखीभावमात्रसम्बोधनस्य प्रकृत्यर्थे एवान्वयः। अभिमुखीभावश्च प्रयोक्तृवचनार्थज्ञानायादरवैशिष्ट्येनावस्थानम्। अयमेव प्रयोक्त्रिच्छाविषयप्रकृतवाक्यार्थविषयकबोधानुकूलो व्यापारः। तदाश्रयत्वं सम्बोध्यत्वम्। एतद्व्यापारानुकूलस्य सम्बोधनविभक्त्यन्तशब्दप्रयोगरूपप्रयोक्तृव्यापारस्येतरनैरपेक्ष्येणैव प्रतीतेस्तस्य न वाक्यार्थत्वम्। अभिमुखीभावस्यापि प्रातिपदिकार्थत्वमेव। तथाच राम मां पाहीत्यादौ अभिमुखीभवद्रामाद्युद्देश्यकप्रवर्तनाविषयो मत्कर्मकं रक्षणमिति बोधः। राम देवदत्तं मां पाहीत्यादौ च देवदत्तरक्षणं रामोद्देश्यकनिवर्त्तनाविषय इति बोधः। व्रजानि देवदत्तेत्यादौ जानीहीत्यध्याहारस्वीकारादेव सम्बोधनस्य कर्तृत्वव्यवहारो वृद्धोक्तः संगच्छते। अन्यथा व्रजनक्रियाकर्तृत्वस्याभावात्। तत्र स दुरुपपादः। अस्माकं तु सुपपादः। तस्यैव त्वं पदार्थत्वेन अध्याहृतक्रियाकर्तृत्वात्। अत एव च तिङ्समानाधिकरणे प्रथमेति वार्तिकमते प्रथमा सिध्यति। तिङ्समानाधिकरणयुष्मत्पदसमानाधिकरणत्वात्। तद्ध्वनयन्नाह-अभिमुखीभवद्देवदत्ताभिन्नयुष्मदर्थेति। अत्र च श्रूयमाणपदवृत्त्यैव बोधस्वीकारात् देवदत्तपदेनैव लक्षणया देवदत्तोद्देश्यकप्रवर्तनाविषयज्ञानरूपवाक्यार्थबोधनात् 'एकतिङ् वाक्यम्' इति परिभाषितं वाक्यलक्षणमपि समन्वेतीति आमन्त्रितनिघातसिद्धिः। एतेन अध्याहृतक्रियायामन्वये व्रजानीत्यनेनैकवाक्यत्वाभावान्निघातो न स्यादित्यपास्तम्। 'नद्यास्तिष्ठति कूले' इत्यादाविव परम्परया व्रजानीत्यनेनान्वयस्य अध्याहृतक्रियान्वयेऽपि सत्त्वेनैकवाक्यत्वस्य सुलभत्वाच्चेति दिक्।

यायामन्वयात् क्रियाजनकत्वरूपं कारकत्वम् । देवदत्त त्वं गच्छेत्यादौ अ-भिमुखीभवद्देवदत्ताभिन्नयुष्मदर्थोद्देश्यकप्रवर्तनादिविषयो गमनमिति बोधः । अत एव—

आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा ।
यथायथं विभक्त्यर्थाः सुपां कर्मेति भाष्यतः ॥

इत्यभियुक्तोक्तम्—

सुपां कर्मादयोऽप्यर्थाः सङ्ख्या चैव तथा तिङाम् ।

इति भाष्यं च सङ्गच्छते । अनुक्तकर्त्रादिषु तृतीयादयो विभक्तयः, अ-नभिहिताधिकारे तासां विधानादित्यन्यत्र विस्तरः ॥

ननु क्रियानिमित्तत्वं कारकत्वमिति स्वीकार्यमिति चेत् , न । चैत्रस्य तण्डुलं पचतीत्यत्र सम्बन्धिनि चैत्रादावतिव्याप्तेः । अनुमत्यादिप्रकाशन-द्वारा सम्प्रदानादेरिव तण्डुलादिद्वारा सम्बन्धिनोऽपि क्रियानिमित्तत्वात् । किन्तु क्रियाऽन्वितविभक्त्यर्थान्वितत्वं क्रियानिर्वर्त्तकत्वं वा कारकत्वम् । विशेष्यतया क्रिया सुप्तिङन्यतरविभक्त्यर्थेऽन्वेति । स च विशेष्यतयैव चैत्रघटादौ । षष्ठ्यर्थस्य तण्डुलादिनामार्थान्विततया क्रियाऽनन्वितत्वात् । अत एव षष्ठ्यर्थस्योपपदविभक्त्यर्थस्य च न कारकत्वम्, क्रियान्वयाभावा-दिति शाब्दिकाः । उपपदविभक्तीनामपि सम्बन्ध एवार्थः । चैत्रस्य पचती-त्यादावपि तण्डुलादिपदाध्याहारेणैव बोधः । षष्ठ्यर्थसम्बन्धस्य नामार्थेनैव

---

रम्भः । तच्चाभिमुखीभवनानुकूलो व्यापारः क्रियान्वय्येवेति भावः ।

*आश्रय इति* । द्वितीयातृतीयासप्तमीनामाश्रयोऽर्थः । *सुपामिति* । 'प्रसि-द्धो नियमस्तत्र नियमः प्रकृतेषु वा' इत्युत्तरार्धमत्रावधेयम् । *तथा तिङामिति* । तद्वत्तिङामपि सङ्ख्याकर्माद्यर्थ इत्यर्थः ।

*क्रियानिमित्तत्वमिति* । अत्र हि निमित्तं साक्षात्परम्परासाधारणम् । इदमेव पूर्वपक्षाणामभिप्रायः । *सम्बन्धिनीति* । सम्बन्धिता च स्वस्वामिभावेन बोध्या । *उपपदविभक्त्यर्थस्येति* । पदोद्देश्यिकाविभक्तिरुपपदविभक्तिः । "नमःस्वस्ति-स्वाहा" इत्यादिविहितचतुर्थ्यादेः पदोद्देश्यकत्वेन क्रियान्वयित्वाभावान्न कारकत्व-मिति भावः । *उपपदविभक्तीनामिति* । उपपदविभक्तीनां षष्ठ्यपवादत्वादिति ता-त्पर्यम् । *अध्याहारेणैवेति* । 'येन विना यदनुपपन्नं तत्तेनाक्षिप्यते, इतिन्यायेन कर्म विनानुपपद्यमानपचिक्रियया योग्यस्य तण्डुलरूपस्य कर्मण आक्षेपोऽत्रावसेयः । *कर्मत्वादिनैवेति* । अत्रादिना करणत्वादीनां सङ्ग्रहो बोध्यः । कारकाणां क्रियये-

क्रियायाः कर्मत्वादिनैव साकाङ्क्षत्वेन सम्बन्धक्रिययोर्निराकाङ्क्षत्वात्।

यत्तु कारकान्तराप्रयोज्यत्वे सति कारकचक्रप्रयोजकत्वं कर्तृत्वमिति। तन्न। स्थाली पचति असिश्छिनत्तीत्यादौ स्थाल्यादेः कारकचक्राप्रयोजकत्वात्कारकान्तरप्रयोज्यत्वाच्च तत्त्वं न स्यादित्यलम्।

कर्मत्वं च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम्। इदमेव कर्मलक्षणे ईप्सिततमत्वम्। गां पयो दोग्धीत्यादौ पयोवृत्तिर्यो विभागस्तदनुकूलो व्यापारो गोवृत्तिः तदनुकूलश्च गोपवृत्तिः। अत्र पयसः कर्मत्वसिद्धये प्रयोज्यत्वनिवेशः। जन्यत्वनिवेशे तन्न स्यात्। प्रयागात्काशीं गच्छतीत्यत्र प्रयागस्य कर्मत्ववारणाय प्रकृतधात्वर्थफलेति। नहि विभागः प्रकृतधात्वर्थः; किन्तु नान्तरीयकतया गमने उत्पद्यते। प्रयागस्य फलतावच्छेदकसम्बन्धेन(१) फलाश्रयत्वेनानुद्देश्यत्वाच्च।

---

वान्वयादिति भावः।

*कारकचक्रेति*। प्रकृतधातूपात्तक्रियान्वययोग्यकारकसमुदायप्रवर्तकमिति भावः। *तत्त्वम्*—कर्तृत्वमिति यावत्।

*प्रकृतधात्वर्थेति*। तेन यदा पुष्ट्यर्थं माषभक्षणाय माषक्षेत्रे एवाश्वबन्धनम्, तदा 'माषेष्वश्वं बध्नाति' इत्यादौ माषाणां न कर्मत्वम्। बन्धनप्रयोज्यभक्षणफलाश्रयत्वेऽपि भक्षणस्य बध्नात्यर्थत्वाभावात्। *ईप्सिततमत्वमिति*। आप्नोतेरिच्छासन्नन्तात् कर्मक्तान्तात् प्रकृत्यर्थातिशयद्योतके तमपि निष्पन्न ईप्सिततमशब्दः। *प्रयोज्यत्वनिवेश इति*। गोव्यापारं विना पयसि व्यापारपूर्वकविभागानुत्पत्तेः गोपव्यापारजन्यो गोव्यापारो धातुवाच्यः। तज्जन्यस्तु पयोनिष्ठो व्यापारपूर्वको विभागः। तत्र पयोनिष्ठव्यापारस्य विभागनान्तरीयकत्वान्न धातुवाच्यतेति न तदुल्लेखः। एवञ्च पयोनिष्ठविभागरूपफलस्य गोपनिष्ठधात्वर्थप्रधानव्यापारजन्यत्वाभावात्कर्म संज्ञा न स्यादिति साक्षात्परम्परासाधारणं प्रयोज्यत्वं निवेशनीयमिति भावः। *नान्तरीयकतयेति*। नहि पूर्वदेशविभागमन्तरेणोत्तरदेशे संयोग उत्पद्यते इति भावः। *फलताव-

---

(१) फलस्य व्यापारे स्वानुकूलत्वं-स्वेच्छाधीनेच्छाविषयत्वम्—एतदुभयसम्बन्धेनान्वयः। तादृशसम्बन्धघटकेच्छीयविषयतावच्छेदकश्च सम्बन्धः फलतावच्छेदकः। तथा च तण्डुलं पचतीत्यादौ 'समवायेन विक्लित्त्याश्रयस्तण्डुलो भवतु' इत्याकारकेच्छायाः कर्तृनिष्ठत्वेन तादृशेच्छीयफलनिष्ठविषयतावच्छेदकत्वस्य समवायएव सत्त्वेन तत्सम्बन्धेन फलाश्रयस्यैव कर्मत्वम्, न तु कालिकादिना फलाश्रयस्य। त-

ननु प्रकृतधात्वर्थग्रहणेनैवात्रवारणादुद्देश्यत्वनिवेशःकिमर्थः, इति चेत्; न। तस्यासाधारणं प्रयोजनं काशीं गच्छन्पथि मृत इति काश्याः फलाश्रयत्वाभावेऽपि फलाश्रयत्वेनोद्देश्यत्वसत्त्वात्कर्मत्वम्। ननु काशीं गच्छति चैत्रे चैत्रः काशीं गच्छति न प्रयागमिति प्रयोगानुपपत्तिः, प्रयागस्य फलाश्रयत्वनोद्देश्यत्वाभावादिति चेत्, उच्यते। कर्मलक्षणे ईप्सिततमपदस्य स्वार्थविशिष्टयोग्यताविशेषे लक्षणा। तथाच प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वयोग्यताविशेषशालित्वं कर्मत्वम्। तच्च

---

च्छेदकसम्बन्धेनेति*। येन सम्बन्धेन फलत्वप्रकारिकेच्छा भवति स एव सम्बन्धः फलतावच्छेदकः। यथा तण्डुलं पचतीत्यत्र समवायसम्बन्धेन विक्लित्याश्रयस्तण्डुलो भवतु इति इच्छायाः सत्वेन तेन सम्बन्धेन तण्डुलस्य फलाश्रयत्वात्कर्मत्वम्। प्रकृते 'प्रयागात्काशीं गच्छति' इत्यत्र अनुयोगित्वविशिष्टसमवायसम्बन्धस्य फलतावच्छेदकत्वात्तेन सम्बन्धेन प्रयागस्य फलाश्रयत्वाभावान्न कर्मत्वमिति भावः। ननु "कर्तुरीप्सततमं कर्म" इत्येव सूत्रमुच्यताम्, सन्ग्रहणञ्च सूत्रे मास्त्वित्यत आह—*नन्विति*। *तच्चेति*। निरुक्तफलाश्रयत्वेनेच्छोद्देश्यत्वयोग्यताविशेषशालित्वमित्यर्थः।

---

त्सम्बन्धस्य निरुक्तेच्छीयविषयतावच्छेदकत्वाभावात्। एवं ग्रामाद्विभजते इत्यादौ विभागसमानाधिकरणव्यापारार्थकविपूर्वकभजधातुयोगे ग्रामादेर्न कर्मत्वम्। तस्य प्रकृतधात्वर्थव्यापारप्रयोज्यविभागरूपफलाश्रयत्वेऽपि "अनुयोगित्वेन विभागाश्रयोऽहं भवानि' इत्याकारकेच्छाया एव तत्र कर्तृनिष्ठायाः प्रतीयमानत्वेन अनुयोगित्वस्यैवेच्छीयविषयतावच्छेदकत्वेन तेन सम्बन्धेन विभागरूपफलाश्रयत्वाभावात्। ग्रामं त्यजतीत्यादौ त्यजधातुयोगे तु ग्रामादेः कर्मत्वं भवत्येव। तत्र त्यजधातुना कर्तृव्यापारव्यधिकरणविभागस्यैव प्रतीत्या "प्रतियोगित्वेन विभागविशिष्टो ग्रामो भवतु" इत्याकारकेच्छाया एव तत्समभिव्याहारे प्रतीत्या च प्रतियोगित्वस्यैवेच्छीयविषयतावच्छेदकत्वेन तत्सम्बन्धेन फलाश्रयत्वस्य सत्त्वात्। एवं च प्रयागात् काशीं गच्छति इत्यत्र नवीनमते पञ्चम्युपपत्तये विभागस्य धात्वर्थत्वेऽपि व्यापारसमानाधिकरणस्यैव विभागस्य प्रतीत्या अनुयोगित्वस्यैव फलतावच्छेदकत्वात्तेन सम्बन्धेन फलाश्रयत्वेन प्रयागस्यानुद्देश्यत्वान्न कर्मत्वमिति भावः। गमधात्वादिसमभिव्याहारेऽपि विभागस्य धात्वर्थत्वं "ध्रुवमपाये" इति सूत्रे शब्देन्दुशेखरे स्पष्टमभिहितमिति तत एवावगन्तव्यम्। जन्यतावच्छेदकस्य, प्रकारतावच्छेदकस्य वा फलतावच्छेदकसम्बन्धत्वमिति तु न युक्तम्। तथा सति ग्रामं त्यजति ग्रामाद्विभजते इत्यादौ समवायस्यैवाविशेषेण फलतावच्छेदकत्वादुभयत्रापि ग्रामादेः कर्मत्वापत्तेरित्यन्यत्र विस्तरः।

प्रयागस्याप्यस्तीति कर्मत्वं तस्य सुलभम् । एतेन कार्यान्तरं कुर्वति चैत्रे किं ग्रामं गच्छति अथ वा ओदनं पचतीति प्रश्ने न ग्रामं गच्छति नौदनं पचतीत्यादिप्रयोगा व्याख्याताः । यत्र तु ताडनादिना पराधीनतया विषभोजनादिकं तत्र विषादि तादृशफलाश्रयत्वेनोद्देश्यमेव । अत एव "आतश्च विषमीप्सितं यद्भक्षयति ताडनात्" इति भाष्यं सङ्गच्छते । एतेन कशाभिहतः कारागारं गच्छतीति व्याख्यातम् । कालत्रये काशीगमनशून्ये चैत्रे काशीं गच्छति चैत्र इति वारणाय विशेष इति । काश्याः फलाश्रयत्वेनोद्देश्यत्वयोग्यतासत्त्वेऽपि तद्विशेषाभावान्न कर्मत्वम् । तद्विशेषश्च व्यापारसमकालिकस्तटस्थजनगम्यः । किञ्च ईदृशस्थले तद्विशेषवत्त्वेऽपि निषेध एवानुभवसिद्ध इति काशीं न गच्छतीति किमनुपपन्नम् ।

नन्वन्नं भक्षयन् विषं भुङ्क्ते ग्रामं गच्छंस्तृणं स्पृशतीत्यादौ विषतृणयोरुद्देश्यत्वाभावात् कथं कर्मत्वमिति चेच्छृणु । "तथा युक्तम्" इति लक्षणान्तरात् ; प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वमनी-

---

एवञ्च प्रयागस्य संयोगरूपफलाश्रयत्वेनेच्छोद्देश्यत्वाभावेऽपि निरुक्तयोग्यताविशेषशालित्वात्कर्मत्वं सिद्धमिति तात्पर्यम् । *एतेन*—निरुक्तयोग्यताविशेषशालित्वनिवेशेन । *अत एव*—तादृशस्यापि फलाश्रयत्वेनोद्देश्यत्वादेव । तत्र प्रमाणमाह—*आतश्चेति* । अवश्यमेवेत्यर्थः । यत्र ताडनादिना फलाश्रयत्वं तत्र तेनेच्छैवोत्पाद्यते इति न स "तथा युक्तम्" इत्यस्य विषय इति ध्येयम् । *कशेति* । चर्ममयी रज्जुः कशा, "नध्री वध्री वरत्रा स्यादश्वादेस्ताडनी कशा" इत्यमरः । ननु योग्यतामात्रमेव निवेश्यताम्, किमनेन विशेषपदोपादानेनेत्यत आह—*कालत्रयेऽपीति* । तस्या अपि तादृशयोग्यतासत्त्वात्कर्मत्वं दुर्वारमिति भावः ।

*अन्नं भक्षयन्निति* । यद्यपि 'अन्नं भक्षयन् विषं भुङ्क्ते' इत्यादौ पराधीनतया विषं भुञ्जानेऽपि भुजिक्रियाफलाश्रयत्वेनोद्देश्यत्वात्पूर्वसूत्रेणैव सिद्धम् । तदुक्तं भाष्ये—"आतश्च विषमीप्सितं यत्तद्भक्षयति" इति । तथापि अत्र 'चोरान् पश्यति' इत्यस्योपलक्षणं तद्बोध्यम् । *तथायुक्तमिति* । ईप्सितानीप्सितभेदेन कर्मणो द्विविधत्वाद्विषतृणयोरीप्सितकर्मत्वाभावेऽपि अनीप्सितकर्मत्वस्याबाधान्न काप्यनुपपत्तिरिति भावः । *प्रकृतधात्वर्थफलेति* । नन्वेवं कर्मत्वाननुगमप्रसङ्ग इतिचेदुच्यते—प्रकृतधात्वर्थव्यापारप्रयोज्यप्रकृतधात्वर्थफलविशिष्टत्वं कर्मत्वम् । वैशिष्ट्यञ्च—स्वाश्रयत्व, स्वाश्रयत्वप्रकारकेच्छाविषयत्व एतदन्यतरसंसर्गेण बोध्यम् । एवञ्च

प्सितकर्मत्वमिति तदर्थात्। प्रयागात्काशीं गच्छतीत्यत्र प्रयागस्य कर्मत्ववारणाय प्रकृतधात्वर्थफलेति। द्वेष्योदासीनकर्मसङ्ग्रहार्थमिदं लक्षणम्। दुहादीनां व्यापारद्वयार्थकत्वपक्षे "अकथितञ्च" इति व्यर्थम्, पूर्वेणैवेष्टसिद्धेः। एकव्यापारबोधकत्वपक्षे तु सम्बन्धषष्ठीबाधनार्थम्। तत्पक्षे कर्मसम्बन्धित्वे सति अपादानादिविशेषाविवक्षितत्वमकथितकर्मत्वमिति तृतीयलक्षणेन 'गां पयो दोग्धि' इत्यादौ गामित्यस्य कर्मत्वसिद्धिरित्यन्यत्र विस्तरः।

यत्तु तार्किकाः—कर्मत्वं तु न करणव्यापारवत्त्वम्, तद्धि करणजन्यव्यापारवत्त्वम्। दात्रेण धान्यं लुनातीत्यादौ हस्तादिकरणजन्यव्यापारवति दात्रादावतिव्याप्तेः। नापि क्रियाजन्यफलशालित्वं तत्। चैत्रश्चैत्रं गच्छतीत्यापत्तेः। संयोगरूपफलस्योभयकर्मकर्तृनिष्ठत्वात्। नापि परसमवेतक्रियाजन्यफलशालित्वं तत्। गमिपत्योः पूर्वस्मिन्देशे त्यजेश्चोत्तरस्मिन्देशे कर्मत्वप्रसङ्गात्। नदी वर्धत इत्यादौ अवयवोपचयरूपवृद्धिक्रियायाः तीरप्राप्तिरूपफलाश्रये तीरे कर्मत्वापत्तेश्चेति।

अत्र ब्रूमः—धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वम्, तादृशफलं च गमेस्संयोगस्त्यजेर्विभागः पतेरधोदेशसंयोगः। अधोदेशरूपकर्मणो धात्वर्थनिविष्टत्वादकर्मकत्वेन पर्णं वृक्षाद् भूमौ पततीति। संयोगमात्रफलपक्षे

---

सर्वेषामनुगमसम्भव इति बोध्यम्। *व्यापारद्वयेति*। दुहेः—क्षरणानुकूलव्यापारानुकूलव्यापारोऽर्थः, याचेः—परस्वत्वोत्पत्त्यनुकूलव्यापारानुकूलव्यापारोऽर्थः, एवं संयोगानुकूलव्यापारानुकूलव्यापारो नीधात्वर्थ इति व्यापारद्वयार्थकत्वे पूर्वसूत्रेणैव कर्म्मत्वसिद्धौ "अकथितञ्च" इति सूत्रं विफलमितिभावः। *गामित्यस्येति*। गामित्यत्र गोपदार्थस्येत्यर्थः।

*करणजन्येति*। करणव्यापारजन्येत्यर्थः। 'धात्वर्थक्रियाजन्यफलशालित्वं कर्मत्वम्' इति लक्षणेन दात्रादौ कर्मलक्षणस्यातिव्याप्तिवारणेऽपि "चैत्रो ग्रामं गच्छति" इत्यत्र ग्रामस्येव चैत्रस्यापि कर्म्मत्वापत्तिस्तद्दर्शयति—*संयोगरूपेति*।

*धात्वर्थतावच्छेदकेति*। धातुनिष्ठशक्तिनिरूपकतावच्छेदकेत्यर्थः। एवं गमिपत्योः संयोगानुकूलव्यापारे शक्तिसत्वेन तादृशशक्तिनिरूपकतावच्छेदकतायाः संयोगे सत्वेन तदाश्रयत्वस्य पूर्वस्मिन्देशेऽसम्भवात् पूर्वदेशविभागरूपफलस्य संयोगानुकूलव्यापाररूपक्रियाजन्यत्वेऽपि प्रकृतधात्वर्थतावच्छेदकत्वाभावाच्च तदाश्रयस्य कर्मत्वं त्यजधातोर्विभागानुकूलव्यापारे शक्तत्वेन तत्रोत्तरदेशवृत्तिसंयोगस्य न धात्वर्थताव-

वृक्षाद् भूमिं पततीति । ननु चतुर्थलक्षणेऽपि चैत्रश्चैत्रं गच्छतीत्यापत्तिः, तत्र हि धात्वर्थतावच्छेदकफलं संयोग इति चेत्, न । लक्षणे व्यापारानधिकरणत्वे सतीतिविशेषणादानादित्याहुः । तन्न ।

काशीं गच्छन् पथि मृत इत्यादौ काश्याः, काशीं गच्छति न प्रयागमित्यादौ प्रयागस्य, ग्रामं न गच्छतीत्यादौ ग्रामस्य च तादृशफलशालित्वाभावादेतस्य लक्षणस्यात्र सर्वत्राव्याप्तेः ।

ननु वृक्षं त्यजति खग इत्यत्र वृक्षस्य विभागरूपफलाश्रयत्वेनापादानत्वमस्त्विति चेत्, न । अत्र हि विभागः प्रकृतधात्वर्थः । यत्र च विभागो न प्रकृतधात्वर्थस्तद्विभागाश्रयस्यैवापादानत्वम्, यथा वृक्षात्पततीत्यादौ । यत्र च प्रकृतधात्वर्थो(१)विभागस्तत्रोभयप्राप्तौ "अपादानमुत्तराणि कारकाणि बाधन्ते" इति भाष्ययुक्तेः कर्मत्वम् । अनुक्ते कर्मणि षष्ठीद्वितीये, भारतस्य श्रवणं भारतं शृणोतीति यथा ।

सकर्मकत्वं च फलव्यधिकरणव्यापारवाचकत्वम् । फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम् । अद्य देवदत्तो भवति उत्पद्यत इत्यर्थः । अत्रोत्पत्तिरूपं फलं बहिर्निस्सरणं च व्यापारः देवदत्तनिष्ठ एव । व्यापारमात्रवाचकत्वं वाऽकर्मकत्वम् । अस्ति भवति विद्यते वर्तत इत्यादिधातुषु फलस्य सर्वैर्दुर्विज्ञेयत्वात् । सत्ता हि स्थितिरूपो व्यापारविशेषः ।

---

च्छेदकत्वं किन्तु विभागस्यैवेति नोत्तरदेशे कर्म्मत्वातिव्याप्तिरिति भावः । *लक्षणे*—लक्षणघटकफले इत्यर्थः । *व्यापारानधिकरणत्वे इति* । एवञ्च धात्वर्थतावच्छेदकव्यापारानधिकरणफलशालित्वमिति फलितम् । चैत्रवृत्तिसंयोगस्य व्यापारसमानाधिकरणत्वान्न कर्मत्वापत्तिरिति भावः ।

*विभागरूपफलाश्रयत्वेनेति* । इदञ्च विभागाश्रयत्वमपादानत्वमित्यभिमानेनोक्तम् । वस्तुतस्तु प्रकृतधात्वर्थविभागजनकतत्क्रियानाश्रयत्वे सति प्रकृतधात्वर्थजन्यविभागाश्रयत्वेन विवक्षिततत्वमेव लक्षणम्, "ध्रुवमपायेऽपादानम्" इतिसूत्रस्वरसात् । अत एव "अपाये यदुदासीनं चलं वा यदि वा चलम् । ध्रुवमेवातदावेशात्तदपादानमिष्यते" इति हर्युक्तिरपि सङ्गच्छते ।

*स्थितिरूप इति* । स्वस्वरूपधृत्यनुकूलो व्यापार इति भावः । नन्वेवं "फल-

---

(१) फलतावच्छेदकसम्बन्धेन च फलाश्रयत्वमिति शेषः ।

देवदत्तोऽस्तीत्यादौ देवदत्तकर्तृका सत्तेत्येव बोधाच्च। "फलव्यापारयोर्धातुर्वाचक" इति तु बाहुल्याभिप्रायेणेति; दिक्।

स्वनिष्ठव्यापाराव्यवधानेन फलनिष्पादकत्वं करणत्वम्। इदमेव साधकतमत्वम्।

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्॥

इति ह्युक्तेः। क्रियाया इत्यस्य फलात्मिका या इत्यर्थः। रामेण बाणेन हतो वालीत्यादौ धनुराकर्षणादेर्व्यापारस्य बाणव्यापारात्पूर्वमपि कर्तरि सत्त्वात्। रामाभिन्नकर्तृनिष्ठव्यापारप्रयोज्यो यो बाणनिष्ठो व्यापारस्तज्जन्यं यत् प्राणवियोगरूपं फलं तदाश्रयो वालीति बोधाच्च। रामो बाणेन वालिनं हन्तीत्यादौ क प्रत्यये बाणव्यापारजन्यो यो वालिनिष्ठः प्राणवियोगस्तदनुकूलो रामकर्तृको व्यापार इति बोधः। अर्थाद्रामव्यापारप्रयोज्यो बाणव्यापार इति पार्ष्णिको बोधः। कर्त्रादिपञ्चकारकाणां करणत्ववारणाय व्यापाराव्यवधानेनेति दिक्।

(१) क्रियामात्रकर्मसम्बन्धाय क्रियायामुद्देश्यं तत् कारकं तत्त्वं सम्प्र-

---

व्यापारयोर्धातु-"रित्यादिकारिकतो विरोध इत्यत आह—*बाहुल्याभिप्रायेणेति*।

*स्वनिष्ठेति*। यस्य करणत्वं चिकीर्षितं तदेव स्वपदेन ग्राह्यम्। यथाहि-'रामेण बाणेन हतो वाली' इत्यत्र बाणव्यापाराव्यवहितोत्तरफलनिष्पादकत्वं बाणस्येति लक्षणसमन्वयः। परे तु फलायोगव्यवच्छिन्नकारणत्वं करणत्वम्। स्वव्याप्येतरयावत्कारणसमवधाने सति यदव्यवहितोत्तरक्षणे फलनिष्पत्तिस्तत्त्वमिति यावत्। सत्यन्तनिवेशाच्चक्षुषोऽन्धःकारे फलायोगेऽपि न तत्राऽप्रसङ्गः। प्रयोजकेऽतिप्रसङ्गनिरासायाव्यवहितेति वदन्ति।

*क्रियाया इति*। अत्र क्रियापदं फलपरम्। 'बाणेन हतः' इत्यत्र बाणव्यापाराव्यवहितोत्तरक्षणे प्राणवियोगरूपफलावश्यम्भावाल्लक्षणसमन्वयः। *विवक्ष्यते इति*। विवक्ष्यते इत्यनेन विवक्षैव विभक्तौ प्रयोजिका, न वास्तवकरणत्वादिसत्तेति भावः। *इति बोध इति*। "क्रिया प्रधानमाख्यातं सत्वप्रधानानि नामानि" इति यास्कोक्तेः क्रियामुख्यविशेष्यको बोधः। अत्र क्रियापदं साध्यत्वेन प्रतीयमानधात्वर्थपरम्। तेन 'पाचको देवदत्तः' इत्यादौ आश्रयस्य प्राधान्येऽपि न क्षतिः। सत्वम्-द्रव्यम्, लिङ्गसंख्यान्वयीति यावत्। *क्रियामात्रेति*। "मात्रं कार्त्स्न्येऽवधारणे"

---

(१) अत्र मात्रशब्दः कार्त्स्न्ये। तथाच क्रियासामान्यस्य कर्मणा सम्बन्धाये-

दानत्वम्। यथा ब्राह्मणाय गां ददातीत्यादौ दानक्रियाकर्मीभूतगोसम्बन्धाय ब्राह्मणो दानक्रियोद्देश्यः। गोब्राह्मणयोः स्वस्वामिभावः सम्बन्धः, चैत्रो मैत्राय वार्ताः कथयतीत्यत्र मैत्रवार्तयोर्ज्ञेयज्ञातृभावः सम्बन्धश्च।

यत्तु वृत्तिकारः—सम्यक्प्रदीयते यस्मै तत्सम्प्रदानमित्यन्वर्थसंज्ञेयम्। तथा च गोनिष्ठस्वस्वत्वनिवृत्तिसमानाधिकरणपरस्वत्वोत्पत्त्यनुकूलव्यापाररूपक्रियोद्देश्यस्य ब्राह्मणादेरेव सम्प्रदानत्वम्। पुनर्ग्रहणाय रजकस्य वस्त्रदाने रजकस्य वस्त्रं ददातीति सम्बन्धसामान्ये षष्ठ्येवेत्याहुः॥

तन्न। "खण्डिकोपाध्यायः शिष्याय चपेटां ददाति" इतिभाष्यविरोधात्। "कर्मणा यमभिप्रैति" इति सूत्रव्याख्यावसरे भाष्यकृताऽन्वर्थसंज्ञाया अस्वीकाराच्च। अत एव—

तदाचक्ष्वासुरेन्द्राय स च युक्तङ्करोतु यत्।

इति सप्तशतीश्लोकः सङ्गच्छते। तस्माद्रजकाय वस्त्रं ददातीत्यादि भवत्येव। अत्राधीनीकरणेऽर्थे ददातिः। चपेटां ददातीत्यत्र न्यसनेऽर्थे इति।

सम्प्रदानचतुर्थ्यर्थ उद्देश्यः। तथा च ब्राह्मणोद्देश्यकं गोकर्मकं दानमिति बोधो मैत्रोद्देश्यकं वार्ताकर्मकं कथनमिति च। अकर्मकक्रियोद्देश्यत्वं सम्प्रदानत्वमिति लक्षणान्तरम्। यथा पत्ये शेते इत्यादि। पत्युद्देश्यकं

---

इत्यमरकोषादत्र मात्रशब्दः कात्स्न्यर्थको बोध्यः। एवञ्च सकलक्रियाकर्मीभूतसम्बन्धाय क्रियायामुद्देश्यं यत् कारकं सम्प्रदानत्वमित्यर्थः। *ब्राह्मणाय गामिति*। परस्वत्वजनकस्वस्वत्वध्वंसावच्छिन्नेच्छात्मकस्त्यागो दाधात्वर्थः। उद्देश्यत्वं चतुर्थ्यर्थः। गोरूपकर्मणश्चाश्रयत्वसम्बन्धेन स्वस्वत्वरूपफलेऽन्वयेति। तथाच—गोवृत्तिस्वत्वजनकस्वस्वत्वध्वंसानुकूलो विप्राभिन्नोद्देश्यकस्त्याग इति वैयाकरणमते शाब्दबोधोऽवसेयः।

*सम्प्रदानमिति*। स्वस्वत्वनिवृत्तिसमानाधिकरणपरस्वत्वोत्पत्त्यनुकूलव्यापारः सम्प्रदानशब्दार्थः। एवञ्च 'रजकाय वस्त्रं ददाति' इत्यादौ उक्तार्थाभावात् 'रजकस्य वस्त्रं ददाति' इत्येव प्रयोग इति तेषामाशयः। *खण्डिकोपाध्यायः*-बालशिक्षकः। *चपेटाम्*—प्रसृतकरतलम्। 'उद्देश्य इति*। "आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा" इत्यनेन तस्यैव चतुर्थ्यर्थत्वेनाभिधानादिति भावः। *लक्षणान्तरमिति*। "कर्मणा यमभिप्रैति स सम्प्रदानम्" इति सूत्रे कर्मणः क्रियायां साकाङ्क्षि-

---

त्यर्थः, नतु दानरूपाया एव। तेन चैत्रो मैत्राय वार्ताः कथयतीत्यादौ कथनादिसङ्ग्रहः।

नायिकाकर्तृकं शयनमिति बोधः ।

ननु दानादीनां तदर्थत्वात्तादर्थ्ये चतुर्थ्यैव सिद्धौ ! किं "कर्मणा यम" इति सम्प्रदानसंज्ञया, "चतुर्थीसम्प्रदाने" इति सूत्रं तु "रुच्यर्थानाम्" इति विषये चतुर्थ्यर्थमिति चेन्, न। दानकर्मणो गवादेर्ब्राह्मणार्थत्वेऽपि दानक्रियायाः परलोकार्थत्वात् । अत एव तादर्थ्ये चतुर्थ्यां दानकर्मणो गवादेः सम्प्रदानार्थत्वेऽपि दानक्रियायास्तदर्थत्वाभावेन चतुर्थ्यन्तार्थस्य दानक्रियायामन्वयानापत्त्या कारकत्वानापत्तिरिति हेलाराजः ।

उपकार्योपकारकत्वसम्बन्धस्तादर्थ्यं चतुर्थ्यर्थः । ब्राह्मणाय दधीत्यादौ ब्राह्मणोपकारकं दधीति बोधादिति दिक् ।

तत्तत्कर्तृसमवेततत्तत्क्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वमपादानत्वम्। तदेवावधित्वम् । विभागश्च न वास्तवसम्बन्धपूर्वको वास्तव एव;

---

त्वात् क्रियालाभः । अभिप्रैति-इच्छति सम्बन्धुमिति कर्मसम्बन्धाय यः सम्बन्धुमिच्छति स सम्प्रदानम् । तत्फलितार्थकथनमिदम्-"क्रियामात्रकर्मसम्बन्धाय" इति । तेन 'ब्राह्मणाय गां ददाति' शिष्याय शास्त्रमध्यापयति' इत्यादि सिद्धम् । 'पत्ये शेते' इत्यादौ तु तेन लक्षणेन सम्प्रदानसंज्ञाया अप्राप्तिरतः "क्रियया यमभिप्रैति स सम्प्रदानम्" इति वार्तिकारम्भः । तन्मूलकमेवेदं लक्षणम् 'अकर्मक्रियोद्देश्यत्वम्' इति तात्पर्यम् । *पत्ये शेते इति* । परे तु 'पत्ये शेते' इत्यादौ शयनादिक्रियाया अपि सन्दर्शनप्रार्थनव्यवसायजन्यारम्भक्रियानिरूपितकर्मत्वमाहुरिति न तदर्थं लक्षणान्तरस्यापेक्षेतिदिक् ।

ननु स्वर्गरूपोपकारस्य विप्राद्यगामित्वेऽपि दुग्धाद्युपभोगरूपोपकारस्य तद्गामित्वात् तज्जनकत्वस्य दुग्धादिद्वारा गवादाविव गवादिद्वारा तद्दानादावपि सम्भवात् तादृशस्यैव तादर्थ्यस्य विवक्षया कैयटादिमते दानादिक्रियान्वयोपपत्त्या कारकत्वमुपपद्यत एवेति न तत्प्रयुक्तकार्याणामनापत्तिः सूत्राभावेऽपीत्यत आह—*तदर्थत्वात्तादर्थ्येति* । *दानक्रियायामन्वयानापत्त्येति* । दानक्रियायाः स्वर्गार्थत्वात् स्वर्गरूपोपकारस्य दानक्रियाकर्तृगामित्वात् तद्गतफलद्वारा तज्जनकत्वरूपतादर्थ्यस्य ब्राह्मणादिनिरूपितस्य दानक्रियायामभावेन चतुर्थ्यन्तार्थस्य तत्रान्वयानापत्तिरित्यर्थः । अपि च तादर्थ्यरूपविभक्त्यर्थस्य दानादावनन्वये गवादावेवान्वये च 'ब्राह्मणाय गोदानम्' इत्यादौ सापेक्षत्वात्समासानापत्तिः । कारकविभक्त्यर्थसाकाङ्क्षस्येव तादर्थ्यसापेक्षस्यापि समासाङ्गीकारे 'ब्राह्मणाय कम्बलरोमाणि' इत्यादेरप्यापत्तिरिति बोध्यम् ।

किन्तु बुद्धिपरिकल्पितसम्बन्धपूर्वको बुद्धिपरिकल्पितोऽपि । माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यादौ बुद्धिपरिकल्पितापायाश्रयणेनैव भाष्ये पञ्चमी साधनात् । अत एव चैत्रान्मैत्रः सुन्दर इत्यादिर्लोके प्रयोगः । (१) वृक्षं त्यजति खग इत्यादावपादानत्ववारणाय प्रकृतधात्वर्थवाच्येति । परस्परस्मान्मेषावपसरत इत्यत्रापादानत्वाय तत्तत्कर्त्रिति । तत्तत्पशुविशेषनिष्ठव्यापारजन्यविभागाश्रयस्तत्तत्पशुविशेषः । किं च मेषपदवाच्ययोः पशुविशेषयोः क्रियाश्रयत्वविवक्षा, परस्परपदवाच्ययोस्तयोस्तु विभागाश्रयत्वविवक्षेत्यौपाधिकस्तयोर्भेदः । शब्दस्वरूपोपाधिकृतभेदोऽप्यर्थे गृह्यते । यथाऽऽत्मानमात्मना वेत्तीत्यादौ शरीरावच्छिन्नं कर्तृ, अन्तःकरणावच्छिन्नं करणं, निरवच्छिन्नं निरीहं कर्म । एकस्यैव शब्दभेदाद्भेदः । शब्दालिङ्गितस्यैव सर्वत्र भानात् । तदाह—

न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ।। इति

ननु ह्येतदौपाधिकभेदमादायैवात्रापादानत्वे सिद्धे किं तत्तत्कर्तृसमवेतेत्यनेनेति चेत्, न । पर्वतात्पततोऽश्वात् पतत्यश्ववाह इत्यादावश्वस्यापादानत्वाय तत्स्वीकारात् । ननु वृक्षात्पर्णं पततीत्यादौ तादृशफलाश्रयत्वात्पर्ण-

*बुद्धिपरिकल्पित इति* । "जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्" इतिवार्तिकप्रत्याख्यानपरम्भाष्यमत्र प्रमाणम् । तथाहि—"तर्हि वक्तव्यम्; न वक्तव्यम् । कथं तावत् अधर्माज्जुगुप्सते अधर्मात् बिभत्सते, इति । य एष मनुष्यः प्रेक्षापूर्वकारी भवति दुःखोऽधर्मो नानेन कृत्यमस्तीति स बुद्ध्या सम्प्राप्य निवर्तते । तत्र "ध्रुवमपायेऽपादानम्" इत्येव सिद्धम्" इत्यादिभाष्ये उक्तम् । अनेन भाष्येण बुद्ध्या परिकल्पितमपादानत्वं स्पष्टमेवोक्तम् । *वृक्षमिति* । खगसमवेतविभागानुकूलक्रियाजन्यविभागाश्रयत्वात् वृक्षस्यापादानत्वापत्तिरिति भावः । *परस्परस्मादिति* । परस्परपदोपात्तयोरपादानत्वम्, तत्तत्क्रियाश्रयत्वान्मेषपदोपात्तायाः कर्तृत्वञ्चोपपद्यत इत्यर्थः ।

*न सोऽस्तीति* । यथा ज्ञानं विषयमपोह्य न भासते; किन्तु विषयविशिष्टमेव, तथा शब्दोऽपि स्वरूपं परित्यज्य न केवलमर्थं प्रत्याययतीतिभावः । *पर्वतात्पतत इति* । अश्वसमवेतक्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वेन पर्वतस्य, अश्ववाहसमवेतक्रियाजन्यप्रकृतधात्ववाच्यविभागाश्रयत्वेन चाश्वस्यापादानत्वमिति भावः । *तदिति* । तत्तत्कर्तृसमवेतेति । *पर्णस्यापादानत्वमिति* । पर्णसमवेतक्रियाजन्य-

(१) अत्रत्यं तत्त्वं पूर्वमुक्तम् ।

स्याप्यपादानत्वं विभागस्य द्विष्ठत्वादिति चेत्, न। परया कर्तृसंज्ञया बाधा-त्। अतएव "अपादानमुत्तराणि कारकाणि बाधन्ते" इति भाष्यं सङ्गच्छते।

यत्तु केचित्–गत्यनाविष्टत्वे सति तज्जन्यविभागाश्रयत्वमपादानत्व-मिति। तन्न। तत्तद्वाक्ये मेषाश्वयोरपादानत्वानापत्तेः। यदपि अपसरत इति सृधातुना गतिद्वयस्याप्युपादानादेकनिष्ठां गतिं प्रतीतस्यापादानत्वम-विरुद्धमिति। तन्न। क्रियाया एकत्वात्। अत एव "न वै तिङन्तान्येकशे-षारम्भं प्रयोजयन्ति क्रियाया एकत्वात्" इति भाष्यं सङ्गच्छते।

पञ्चम्यर्थोऽवधिः। वृक्षावधिकं पर्णकर्तृकं पतनमिति बोधः। पर्वताव-धिकपतनाश्रयाभिन्नाश्वावधिकमश्ववाहकर्तृकं पतनमिति बोधः। पर-स्परमेषावधिकं द्वित्वावच्छिन्नमेषकर्तृकमपसरणमिति बोध इति दिक्।

कर्तृकर्मद्वारकफलव्यापाराधारत्वमधिकरणत्वम्। यथा स्थाल्यामोदनं गृहे पचतीत्यादौ कर्मद्वारकविक्लित्तिरूपफलाधारः स्थाली, कर्तृद्वारकव्यापा-राधारो गृहमिति। ननु साक्षात्क्रियाधारयोरोदनचैत्रयोरधिकरणत्वलब्धौ प-रम्परया तदाधारयोर्गृहस्थाल्योस्तत्संज्ञा त्वयुक्तेति चेत्, न। परत्वात्कर्तृकर्मसं-

---

प्रकृतधात्ववाच्यविभागाश्रयत्वं यथा वृक्षस्य; तथा पर्णस्यापि सत्वादपादानत्वापत्ति-रिति भावः। *अत एवेति*। परया कर्तृसंज्ञया बाधादेवेति। *गत्यनाविष्टत्वे सती-ति*। संयोगानुकूलव्यापारानाश्रयत्वे सतीत्यर्थः। *तज्जन्येति*। विभागजनकक्रिया-जन्येत्यर्थः। एवञ्च 'वृक्षात्पर्णम्' इत्यादौ वृक्षादेस्तादृशव्यापारानाश्रयत्वात् पर्णवृत्त्यु-त्तरदेशसंयोगानुकूलव्यापारजन्यविभागाश्रयत्वेन विवक्षितत्वाच्च वृक्षस्यापादानत्वसि-द्धिरिति तेषामाशयः। *तत्तद्वाक्ये इति*। 'परस्परान्मेषावपसरतः' पर्वतात्पततोऽ-श्वात्पतति' इत्यादिवाक्ये इति यावत्। भूषणकारस्य मतं खण्डयति—*यदपीति*। *गतिद्वयस्येति। गतित्वसामान्यधर्मपुरस्कारेणैकेनैव धातुना कर्तृभेदेन गतिरूपक्रि-याद्वयस्य प्रतीतिसम्भवाभिप्रायेणेदमुक्तमिति बोध्यम्। *क्रियाया एकत्वादिति*। द्विवचनार्थद्वित्वसंख्यायाः कर्त्राश्रयत्वेन प्रतीतेरेकशेषं विना धातुतः प्रतीतिसम्भवा-भावादिति भावः। धातूनामेकशेषस्याभावे प्रमाणमुपदर्शयति—*अत एवेति*।

*कर्तृकर्मद्वारेति*। एतादृशार्थलाभश्च तत्सूत्रसामर्थ्यादेव लभ्यते। तथाहि—कारकाधिकारीयेणैतेन क्रियान्वय्याधारस्याधिकरणसंज्ञा विधीयते। क्रिया च धात्व-र्थः। साक्षादाधारस्य पराभ्यां कर्तृकर्मसंज्ञाभ्यामाक्रान्तत्वादिदं सूत्रमनवकाशं सत्

ज्ञाभ्यां साक्षादाधारीभूते बाधात्(१) । स्थाल्यधिकरणिका या ओदननिष्ठा-विक्लित्तिस्तदनुकूलो गृहाधिकरणको(२)मैत्रकर्तृको व्यापार इति बोधः ।

तच्चाधिकरणं त्रिधा । अभिव्यापकमौपश्लेषिकं वैषयिकं चेति । तत्र सकलावयवव्याप्तौ व्यापकाधारत्वम्, यथा तिलेषु तैलमस्तीत्यादि । उप समीपे श्लेषः सम्बन्ध उपश्लेषस्तत्कृतमौपश्लेषिकम् । अत एव "इको यणचि" इत्यादावौपश्लेषिकाधारे सप्तम्युक्ता "संहितायाम्" इति सूत्रे भाष्ये । तत्रा जादि सामीप्यमेवेगादीनाम् । "यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधिकरणम् मासिकं धान्यम्" इत्युक्तम् "तत्र च दीयते" इति सूत्रे भाष्ये ।

---

परम्परया तदाश्रयस्य ग्रहणम्बोधयति । परम्परा च कर्तृकर्मद्वारैवेति स्पष्टम्—"कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम् । उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्" इति वाक्यपदीयादिति यावत् । *मैत्रकर्तृक इति* । एकत्वविशिष्टमैत्राभिन्नाश्रयवृत्तिर्वर्तमानो व्यापार इति भावः ।

*अभिव्यापकमिति* । व्याप्यव्यापकभावघटितसम्बन्धेन क्रियाश्रयोऽभिव्यापकम् । *औपश्लेषिकमिति । संयोगघटितपरम्परासम्बन्धेन क्रियाश्रय औपश्लेषिकम् । *सप्तम्युक्तेति* । अत एव ईदृशसूत्रेषु "तस्मिन्निति०" इतिसूत्रोपस्थितिः । तस्या हि औपश्लेषिकाधारबोधकसप्तम्यन्तप्रवृत्तौ निमित्तमिति ध्येयम् । *उक्तभाष्यविरोधादिति* । तद्भाष्येण हि समीपत्वस्य सप्तम्यर्थत्वप्रतीत्या 'कटे आस्ते' इत्यत्र तस्याभा-

---

(१) बाधादिति । अतएव गृहं प्रविशति, मोक्षमिच्छति इत्यादौ न सप्तमी । मोक्षे इच्छाऽस्ति इति तु प्रत्ययोपात्तेच्छारूपकर्तृद्वारा अस्तिक्रियायामन्वयाद्बोध्यम् । धातूपात्तेच्छायामन्वये तु कर्मत्वात् "कर्तृकर्मणोः" इति षष्ठ्येवेति दिक् ।

(२) अन्ये तु गृहाधिकरणको यश्चैत्रस्तत्कर्तृको व्यापारः, स्थाल्यधिकरणको य ओदनस्तन्निष्ठा या विक्लित्तिरित्येवम् अधिकरणकारकस्य कर्तृकर्मणोरेवान्वयः । अत एव अक्षशौण्ड इत्यादौ समासः सिध्यति । क्रियायामन्वये तु शौण्डादिना ऽसामर्थ्यात् समासो न स्यात् । शौण्डादिपदस्य आसक्तशौण्डादौ लक्षणया अन्तर्भूताशक्त्यादिक्रियाद्वारा सामर्थ्योपपादनं तु न युक्तम् । अक्षविषयकशौण्डत्ववान् इति बोधस्यैव ततो जननात्, विवक्षितत्वाच्च । अक्षशौण्डस्य धनमित्यादौ शौण्डादेरकर्तृत्वे तु अगत्या आसक्तशौण्डादौ लक्षणाश्रयणम् । तत्र शौण्डत्वस्य विधेयत्वेनाविवक्षितत्वाल्लक्षणाश्रयणेऽदोषात् । एतेन तत्र लक्षणास्वीकारेऽत्रापि लक्षणोचितेत्यपास्तमित्याहुः ।

यत्तु कटे आस्ते इत्यौपश्लेषिकोदाहरणमुक्तं कैयटेन, तदयुक्तम्, उक्त-भाष्यविरोधात्। एतद्द्वयतिरिक्तं वैषयिकमधिकरणम्। कटे आस्ते, जले सन्ति मत्स्या इत्यादि (१)अभिव्यापकातिरिक्तं गौणमधिकरणमिति बोध्य-म्। सप्तम्यर्थोऽधिकरणमिति दिक्।

ज्ञापकक्रियाश्रयवाचकादुत्पन्नायाः सत्सप्तम्यास्तु क्रियान्तरज्ञापकत्वम-र्थः। तत्रानिर्णीतकालिकायाः (२) क्रियाया निर्णीतकालिका ज्ञापिका। गो-षु दुह्यमानासु गत इत्यादौ गोनिष्ठदोहनक्रियाज्ञापितगमनाश्रयश्चैत्र इति बोधः(३)।

---

वात्रौपश्लेषिकोदाहरणमिति बोध्यम्। *वैषयिकमिति*। विषयतावटितपरम्परास-म्बन्धेन क्रियाश्रयो वैषयिकम्। 'खे पक्षिणः' मोक्षे इच्छा अस्ति' इत्युदाहरणानि अस्य ज्ञेयानि। *सप्तम्यर्थ इति*। अधिकरणत्वशक्तिमांश्चाधिकरणविभक्त्यर्थः।

*ज्ञापकक्रियेति*। "यस्य च भावेन भावलक्षणम्" इति सूत्रविहितसप्तम्या इत्य-र्थः। *गोषु दुह्यमानास्विति*। ज्ञापकक्रियाश्रयः कर्ता कर्म च। तत्र 'ब्राह्मणेष्वधी-

---

(१) अग्रे वृक्षः कपिसंयोग्यस्तीत्यादौ अग्राधिकरणिका कपिसंयोगविशिष्टवृक्ष-कर्तृका सत्ता इति बोधे संयोगस्याव्याप्यवृत्तित्वात् वृक्षस्यावयवान्तरे मूलादौ कपि-संयोगविशिष्टवृक्षाभावप्रतीतेः कपिसंयोगे अग्रावच्छेद्यत्वं फलति। शिरसि मे वेदना इत्यादि तु अवच्छेद्यावच्छेदकभावसम्बन्धस्याप्याधारतानियामकत्वादुपपादनीयम्।

(२) अनिर्णीतकालिकाया इति। एवम् अनिर्णीतदेशिकाया निर्णीतदेशिका लक्षणम्। सति गुणे द्रव्यत्वमस्तीत्यादौ गुणनिष्ठसत्ताज्ञाप्या द्रव्यत्वनिष्ठा सत्तेति बो-धः। ज्ञाप्यज्ञापकभावस्योत्सर्गतः सामानाधिकरण्ये सत्येव प्रतीतेः सामानाधिकरण्येन गुणविशिष्टं द्रव्यत्वमिति फलति। एतन्मूलक एव सत्सप्तम्या वैशिष्ट्यमर्थ इति तार्कि-काणां प्रवादः। जले पीते तृषा शाम्यतीत्यादौ भूतार्थकप्रत्ययसमभिव्याहारे एतद्योगे हेतुत्वस्याप्याकाङ्क्षया प्रतीतेरस्या निमित्तसप्तमीत्वव्यवहारोऽपीति दिक्। ज्ञाप्य-ज्ञापकभावश्च तत्तच्छब्दबोध्यत्वेन विवक्षित एवैतच्छास्त्रप्रवृत्तौ निमित्तम्, नतु वह्नि-धूमयोरिव व्यभिचारादर्शनसहकृतभूयोदर्शनाश्रयः। तथासति उदिते आदित्ये तमो नष्टमित्यादावेव स्यात्, गोषु दुह्यमानासु गत इत्यादौ कादाचित्कगमने विवक्षिते न स्यादिति बोध्यम्।

(३) दुह्यमानगोज्ञाप्यगमनाश्रय इति शब्दतो बोधे गोर्ज्ञापकत्वस्य विशेषणी-भूतदोहनक्रियाद्वारैव पर्यवसितत्वात् गोनिष्ठदोहनक्रियाज्ञाप्यगमनाश्रयश्चैत्र इति बोधः फलितो भवति। एवमेव सति गुणे द्रव्यत्वमित्यादावपि बोध्यम्।

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः सम्बन्धः षष्ठ्या वाच्यः। तत्र राज्ञः पुरुष इत्यादौ षष्ठीवाच्यसम्बन्धस्याश्रयाश्रयिभावसम्बन्धेन पुरुषेऽन्वयः। राजनिरूपितसम्बन्धवान् पुरुष इति बोधात्। ननु सम्बन्धस्योभयनिष्ठत्वात् पुरुषशब्दादपि षष्ठ्युत्पत्तिरस्त्विति चेत्, न। राजसम्बन्धिपुरुष इतिविवक्षायां राजशब्दादेव षष्ठी, 'प्रकृत्यर्थप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यम्' इति व्युत्पत्त्यनुरोधात्। अन्यथा तद्विवक्षायां राजा पुरुषस्येति पुरुषशब्दात् षष्ठ्यां पुरुषार्थं प्रति षष्ठ्यर्थस्य विशेषणत्वापत्त्या व्युत्पत्तिभङ्गापत्तेः। अत एवाह—

भेद्यभेदकयोश्चैकसम्बन्धोऽन्योन्यमिष्यते।
द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात्॥ इति।

भेदकः सम्बन्धनिरूपको, भेद्यः सम्बन्धाश्रयः।

इति षट् कारकाणि॥

---

यानेषु गतः' इति कर्त्रर्युदाहरणम्। कर्मण्युदाहरणम्—'गोषु दुह्यमानासु गतः' इति। अत्र दोहनक्रियाज्ञानजन्यज्ञानविषयताश्रयो य उत्तरदेशसंयोगस्तदनुकूलव्यापाराश्रयाभिन्नश्चैत्र इति बोधः।

*स्वस्वामिभावादिरिति*। अत्रादिनावयवावयविभावजन्यजनकभावविषयविषयिभावादयो ग्राह्याः। प्राचीनास्तु सम्बन्धत्वेन रूपेण तत्तत्सम्बन्धे शक्तिः स्वीकुर्वन्ति, न सम्बन्धेषु प्रत्येकं शक्तिः। अनेकशक्तिकल्पने गौरवापत्तेः। एवञ्च शक्यतावच्छेदकस्य सम्बन्धत्वस्य कर्तृत्वकर्मत्वादिषु विद्यमानत्वात् सम्बन्धत्वेन रूपेण षष्ठ्यर्थताऽस्त्येव। अत एव सम्बन्धत्वविवक्षायां 'सतां गतम्' 'सर्पिषो जानीते' इत्यादौ षष्ठी सिद्धा। नव्यास्तु—सम्बन्धत्वेन रूपेण न स्वस्वामिभावादिसम्बन्धः षष्ठ्या वाच्यः। "एकशतं षष्ठ्यर्थाः" इति "षष्ठीस्थानेयोगा" इतिसूत्रस्थभाष्यमप्यत एव सङ्गच्छते। 'राज्ञः पुरुषः' इत्यादौ तु स्वत्वस्वामित्वरूपः समूहः षष्ठ्यर्थो न स्वत्वं स्वामित्वं वा। तस्यैकमात्रवृत्तित्वादित्याहुरिति दिक्।

*व्युत्पत्तिभङ्गापत्तेरिति*। 'प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यम्' इति व्युत्पत्तिभङ्गापत्तेरिति भावः। *भेदकात्—*विशेषणवाचकात्।

अथ नामार्थः। अत्र मीमांसकाः—शब्दानां जातौ शक्तिर्लाघवात्। व्यक्तीनामानन्त्येन तत्र शक्तौ गौरवात्।

"नागृहीतविशेषणा बुद्धिर्विशेष्य उपजायते"

इति न्यायस्य विशेषणे शक्तिर्विशेष्ये लक्षणेति तात्पर्यात्। किञ्च एकस्यां व्यक्तौ शक्त्युपदेशे व्यक्त्यन्तरे तदभावेन तद्बोधाप्रसङ्गात्। गामानयेत्यादावन्वयानुपपत्त्या तदाश्रयलक्षकत्वेन निर्वाहश्चेत्याहुः।

तन्न। गोत्वमस्तीत्यर्थेऽन्वया पपत्त्यभावेन गौरस्तीति प्रयोगे व्यक्तिभानानापत्तेः। व्यक्तीनामानन्त्येऽपि शक्यतावच्छेदकजातेरुपलक्षणत्वेन तदैक्येन च तादृशजात्युपलक्षितव्यक्तौ शक्तिस्वीकारेणानन्तशक्तिकल्पनाविरहेणागौरवात्। लक्ष्यतावच्छेदकतीरत्वादिवत् शक्यतावच्छेदकस्यावाच्यत्वे दोषाभावात्। "नागृहीत" इति न्यायस्य विशेषणविशिष्टविशेष्यबोधे

---

*जाताविति*। तत्तत्पदार्थसाधारणो धर्मो जातिरित्यर्थः। तेन अभावत्वाकाशत्वादीनां नित्यानेकसमवेतत्वरूपजातित्वाभावेऽपि न क्षतिः। जातेः शब्दशक्यत्वे मानन्तु "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" इति सूत्रे "सवर्णेऽणग्रहणमपरिभाष्यमाकृतिग्रहणात् सिद्धम्" इति वार्तिकम्। "आकृतिं वाजप्यायनः" इति सरूपसूत्रस्थं भाष्यञ्चेति भावः। युक्तिमप्याह—*लाघवादिति*। एकस्या एव शक्तेरेकस्या एव सम्भवादिति भावः। ननु शक्तिग्राहकशिरोमणिना व्यवहारेण व्यक्तावेव तत्परिच्छेदात्कथं जातौ तत्सिद्धिरत आह—*व्यक्तिनामानन्त्येनेति*। पूर्वव्यवहारेण व्यक्तौ शक्तिग्रहेऽप्यानन्त्यात् तावतीषु शक्तिग्रहासम्भवात्तत्तदाश्रयभेदभिन्ननानाशक्तिकल्पने गौरवात्पश्चाज्जातावेव निर्धार्यते इति भावः।

ननु "नागृहीतविशेषणा बुद्धिर्विशेष्य उपजायते" इतिन्यायेन उभयत्र शक्तेः प्रतीयमानत्वात्कथं जातावेव शक्तिरित्यत आह—*विशेषणे इति।

*गामानयेत्यादाविति*। अत्रादिना 'ब्राह्मणो न हन्तव्यः' इत्यादेः सङ्ग्रहो बोध्यः। एवञ्च सर्वत्र लक्षणयैव स्वाश्रयत्वसम्बन्धेन व्यक्तिभानसम्भवे तत्र शक्तिकल्पनं निष्फलमेव।

मीमांसकमतं खण्डयति—*तन्नेति*। *अन्वयानुपपत्त्येति*। गोत्वस्यानयनक्रियायां कर्मतयान्वयानुपपत्त्येति भावः। *शक्यतावच्छेदकेति*। सम्बन्धितावच्छेदकजातेरनुगतत्वात् तदवच्छिन्नाया एकस्या एव शक्तेरभ्युपगमेन अनन्तशक्तिरूपगौरवस्याभावादिति तात्पर्यम्। ननु शक्यतावच्छेदकत्वाज्जातेरपि वाच्यत्वमावश्यकमिति शङ्कानिरसनायाह—*लक्ष्यतावच्छेदकेति*।

तात्पर्येऽपि त्वदुक्ततात्पर्ये मानाभावात् । जातेरुपलक्षकत्वेन तदाश्रयसकलव्यक्तिबोधेन व्यक्त्यन्तरबोधाप्रसङ्गभङ्गाच्च । तदाह—

आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम् ।
शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति ॥ इति ॥

युक्तं ह्येतत् ।

शक्तिग्रहं व्याकरणोपमान-
कोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति
सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

इत्येतेषु शक्तिग्राहकशिरोमणिर्व्यवहारो व्यक्तावेव शक्तिं ग्राहयति । गवादिपदेन लोके व्यक्तेरेव बोधात् ॥

---

*आनन्त्येऽपीति* । भावानाम्—व्यक्तीनां नानात्वादपरिच्छेद्यत्वेऽपि, एकम्—अनुगतजात्यादिधर्मम्, उपलक्षणम्—अशक्यत्वेऽपि शक्यव्यावर्तकम्, कृत्वा—अभ्युपगम्य, शब्दः—गवाद्यात्मकः, सुकरसम्बन्धः—सुग्राह्यगवादिनिष्ठवाच्यतासम्बन्धः । *नचेति*। शक्तिग्रहाऽविषयव्यक्तिं बोधयिष्यतीति कारिकार्थः । गोत्वादिसामान्यलक्षणया सर्वास्वेव व्यक्तिषु शक्त्यवधारणादिति भावः । एतदेवार्थम्प्रपञ्चयति—*शक्तिग्रहमिति* । पाचकः, पक्ता, इत्यादौ व्याकरणात् । 'गोसदृशो गवयः' इत्यादावुपमानात् । हरिशब्दस्य—इन्द्रादौ, कोशात्, पिकशब्दस्य कोकिलादावाप्तवाक्यात् । प्रयोज्यप्रयोजकवृद्धव्यवहारात् गामानयेत्यादौ तटस्थबालकस्य गोशब्दादौ । "यदान्या ओषधयो म्लायन्ते अथैते मोदमानास्तिष्ठन्ति" इतिवाक्यशेषात् यवपदस्य दीर्घशूकपदार्थे । घटशब्दस्य कलशे शक्तिविवरणात् । 'सहकारतरौ पिको रौति' इत्यत्र प्रसिद्धसान्निध्यात्पिकशब्दस्य कोकिले शक्तिरिति निश्चयो बोध्यः । *व्यवहार इति* । प्रयोजकवृद्धेनोक्तो 'गामानयेति' यदा प्रयोज्यवृद्धो गामानयेति, बधानेत्युक्तो बध्नाति, एवं मुञ्चेत्युक्तस्ताम्मोचयति, तदा पार्श्वस्थबालकोऽवधारयति-'सास्नादिमानयं भावो गोपदवाच्य इति । एवमावापोद्वापाभ्यां सर्वत्र शक्तिग्रहः सुलभः । स च व्यवहारो व्यक्तिविषयक एवेति तस्मात्केवलव्यक्तिरेव शब्दस्य वाच्येति तात्पर्यम् ।

यद्यपि "आकृतिपदार्थस्य द्रव्यं न पदार्थः, द्रव्यपदार्थकस्य चाकृतिर्न पदार्थः, इत्युभयोरुभयं पदार्थः" इति भाष्याद्विशकलितयोरेवाकृतिव्यक्त्योः शक्तिग्रहविषयता लभ्यते, तथापि "कस्यचित् किञ्चिद्गुणभूतं किञ्चित् प्रधानम्" इत्युत्तरभाष्यपर्यालो-

वस्तुतस्तु "न ह्याकृतिपदार्थकस्य(१)द्रव्यं न पदार्थः" इति सरूपसूत्रभाष्याद्विशिष्टमेव वाच्यम्, तथैवानुभवात्। अनुभवसिद्धस्यापलापानर्हत्वाच्च।

लिङ्गमपि नामार्थः। प्रत्ययानां द्योतकत्वात्। अन्यथा वागुपानदादिशब्देभ्य इयं तव वागिति स्त्रीत्वबोधानापत्तेः। अयमितिव्यवहारविषयत्वं पुंस्त्वम्, इयमितिव्यवहारविषयत्वं स्त्रीत्वम्, इदमितिव्यवहारविषयत्वं

---

चनया तत एव विशिष्टे शक्त्यवधारणात् तथोपादानमविरुद्धमित्यतः सिद्धान्तमाह—*वस्तुतस्त्विति*। *आकृतिपदार्थकस्येति*। आकृतिः पदार्थो यस्येति बहुव्रीहिः। तेनात्र अन्यपदार्थः शब्दः। आकृतिवाचकस्य द्रव्यं नार्थ इति न; अपि तु सोऽपीति भाष्याशयः। तथा च न केवलायां जातौ व्यक्तौ वा शक्तिः; किन्तु विशिष्टे एवेति भावः।

*लिङ्गमिति*। लौकिकलिङ्गमेव नामार्थः। तच्च "स्तनकेशवती नारी लोमशः पुरुषः स्मृतः। उभयोरन्तरं यच्च तदभावे नपुंसकम्"। इत्यादिनावयवविशेषसंस्थानरूपम्। दारानित्यादौ पुंस्त्वारोपेण तत्प्रयुक्तकार्यम्। "रात्राह्नाहाः पुंसि" इत्यादिलिङ्गानुशासनस्यैवोक्तार्थं मानत्वात्। अत एव 'पशुना यजेत' इत्यनेन न पशुस्त्रिय यागमिति भावः।

परे तु "स्तनकेशवती नारी लोमशः पुरुषः स्मृतः। एतयोरन्तरं यच्च तदभावे नपुंसकम्"। इत्यत्र केशशब्दस्य भगवाचकत्वाद्भगवत्त्वं स्त्रीत्वम्, लोमशः पुरुष इत्यत्र लोमन्शब्दस्य शिश्नवाचित्वाच्छिश्नवत्त्वं पुंस्त्वम्। तत्तदाकारमात्रधारकत्वं नपुंसकत्वम्। इतिपरिभाषितलिङ्गस्यासार्वत्रिकत्वेन दारानित्यादौ नत्वानापत्त्या, "स्त्रियाम्" इतिसूत्रे "अवश्यं कश्चित् स्वकृतान्त आस्थेयः" इत्यादिना सार्वत्रिकगुणाऽवस्थारूपपारिभाषिकलिङ्गस्य शास्त्रीयकार्योपयोगितायाः भाष्यकृताऽभ्युपगमेऽपि गुरुसंज्ञाविज्ञानान्नत्वादिशास्त्रप्रवृत्तौ लौकिकलिङ्गस्याप्याश्रयणं पुमादिसंज्ञानां संख्यासंज्ञाया इवाधिकसङ्ग्रहार्थं प्रवृत्तत्वेऽपि मतसिद्धार्थनिरासार्थमप्रवृत्तेः। अत एव "आविर्भावतिरोभावस्थितिश्चेत्यप्यपायिनः। धर्मा मूर्तिषु सर्वासु लिङ्गत्वेन व्यवस्थिताः"॥ इत्यत्रापि नालौकिकलिङ्गमपि समुच्चितवान् हरिः। तत्र सति सम्भवे सामानाधिकरण्यसम्बन्धेन लौकिकपुंस्त्वविशिष्टशास्त्रीयलिङ्ग एव पुमादिशब्दानां शक्तिर्न केवलशास्त्रीये, नाऽपि लौकिके असम्भवे तु शास्त्रीय एव। अत एव 'पशुना यजेत' इत्यादौ पशुस्त्रिया कृते यागे वैगुण्यम्। तत्र लौकिकपुंस्त्वविशिष्टशास्त्रीयपुंस्त्वस्यैव शब्देन प्रतिपादनादित्याहुः। *अन्यथेति*। प्रत्ययानां वाचकत्वाङ्गीकारे इत्यर्थः। *स्त्रीत्वबोधानापत्तेरिति*। "प्रकृतिप्रत्ययार्थयोः सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्यैव प्राधान्यम्" इति न्यायेन प्रत्ययार्थस्य लिङ्गस्य प्राधान्यापत्तेश्चेत्यपि दूषणमत्रावसे-

---

(१) मते इति शेषः।

क्लीबत्वमिति विलक्षणं शास्त्रीयं स्त्रीपुन्नपुंसकत्वम्। अत एव खट्वादिशब्दवाच्यस्य स्तनकेशादिमत्त्वरूपलौकिकस्त्रीत्वाभावेऽपि तद्वाचकादाबादिप्रत्ययः।

सङ्ख्याऽपि नामार्थः। विभक्तीनां द्योतकत्वात्। अत एव "आदिर्ञिटुडव" इति सूत्रे आदिरिति बहुत्वे एकवचनम्। वाच्यत्वेऽन्वयव्यतिरेकाभ्यां जसं विना नामार्थबहुत्वप्रतीत्यभावापत्तेः।

कारकमपि प्रातिपदिकार्थ इति पञ्चकं प्रातिपदिकार्थः। नन्वन्वयव्यतिरेकाभ्यां प्रत्ययस्यैव तद्वाच्यमिति चेत्, न। दधि तिष्ठति दधि पश्येत्यादौ कर्त्रादिकारकप्रतीतेः प्रत्ययं विनापि सिद्धत्वात्। न च लुप्तप्रत्ययस्मरणात्तत्प्रतीतिरिति वाच्यम्। प्रत्ययलोपमजानतोऽपि नामत एव तत्प्रतीतेः।

विशेषणतया शब्दोऽपि शाब्दबोधे भासते। युधिष्ठिर आसीदित्यादौ युधिष्ठिरशब्दवाच्यः कश्चिदासीदिति बोधात्।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।

---

यम्। *विलक्षणमिति*। पूर्वोक्तलौकिकलिङ्गतो विलक्षणमिति भावः। *अत एव*—ईदृग्विलक्षणपुंस्त्वादिस्वीकारादेव।

*द्योतकत्वादिति*। वैयाकरणानाम्मते प्रकृतीनामेव संख्यावाचकत्वम्, विभक्तयस्तु द्योतका एवेति भावः। न चान्वयव्यतिरेकाभ्यां विभक्तीनामेव संख्यावाचकत्वकल्पनमुचितमिति वाच्यम्। दधि, पश्य, मधु आनय इत्यादौ विभक्तिं विनापि संख्याकारकप्रतीत्या व्यतिरेकव्यभिचारात्। नैयायिकानाम्मते संख्याऽपि विभक्तेरर्थः, न प्रकृतेः। अनन्तप्रकृतीनां शक्ततावच्छेदकत्वकल्पनापेक्षया विभक्तीनां तत्कल्पने लाघवम्। वस्तुतस्तु "वाचिका द्योतिका वास्युर्द्वित्वादीनां विभक्तयः। यद्वा संख्यावतोऽर्थस्य समुदायोऽभिदायकः" इति हरिकारिकाबलात् न संख्यावाचिका प्रकृतिः, न वा विभक्तिः। किन्तु घट इति विभक्त्यन्तसमुदायः संख्याविशिष्टवाचकः। शक्ततावच्छेदकस्तु तत्तदानुपूर्वीति न कश्चिद्दोषलव इति दिक्।

*अत एव*—विभक्तीनां द्योतकत्वादेव। *जसं विनेति*। प्रकृते जसं विनाऽपि बहुत्वप्रतीतेर्व्यतिरेकव्यभिचारः स्पष्ट एवेति भावः। *पञ्चकमिति*॥"एकं द्विकं त्रिकं चैव चतुष्कं पञ्चकन्तथा। नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः"। इत्यनेन स्वार्थद्रव्यलिङ्गसंख्याकारकाणां नामार्थबोधनात। स्पष्टञ्चेदं "अनभिहिते" इति सूत्रभाष्ये। घटमानयेत्यादिशाब्दबोधे घटादिशब्दस्य भाने प्रमाणाऽभावेन तस्य प्रातिपदिकार्थत्वसाधनमनुचितमित्याशङ्कां परिहरति—*शब्दोऽपीति*। तत्र हरिकारिकां प्रमाणयति—*न सोऽस्तीति*। *प्रत्ययः*—शाब्दबोधात्मकः। *शब्दाऽनुगमादिति*। शब्दविषयकत्वादित्यर्थः। अनुव्यवसायो यथाऽथनविशिष्टज्ञानं विषयो-

अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥

इत्यभियुक्तोक्तेः।

ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा।
तथैव सर्वशब्दानामेते पृथगवस्थिते ॥
विषयत्वमनादृत्य शब्दैर्नार्थः प्रकाश्यते ।

इति वाक्यपदीयाच्च ।

अत एव विष्णुमुच्चारयेत्यादावर्थोच्चारणासम्भवाच्छब्दप्रतीतिः । अत एवानुकरणेनानुकार्यस्वरूपप्रतीतिः । तथाहि—स्वसदृशशब्दमात्रबोधतात्पर्यकोच्चारणविषयत्वमनुकरणत्वम् । स्वसदृशशब्दप्रतिपाद्यत्वे सति शब्दत्वमनुकार्यत्वम् । तत्रानुकार्यादनुकरणं भिद्यते इति तयोर्भेदविवक्षायामनुकार्यस्वरूपप्रतिपादकत्वेनार्थवत्त्वात् प्रातिपदिकत्वात्स्वादिविधिः। भेदपक्षज्ञापकः "भुवो वुग्लुङ्लिटोः" इत्यादिनिर्देशः। अनुकार्यादनुकरणमभिन्नमित्यभेदविवक्षायां चार्थवत्त्वाभावान्न प्रातिपदिकत्वम्; न वा पदत्वम्। अभेदपक्षज्ञापकस्तु 'भू–सत्तायाम्' इत्यादिनिर्देशः। प्रातिपदिकत्वपदत्वाभावेऽपि भू इत्यादि साधु भवत्येव ॥

ननु 'अपदं न प्रयुञ्जीत' इति भाष्यादसाध्विदमिति चेत्, न। अपदमित्यस्य हि अपरिनिष्ठितमित्यर्थः। परिनिष्ठितत्वंच–अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम्। देवदत्तो भवतीत्यादौ "तिङ्ङतिङः" इति निघाते

---

करोतिः तथा शब्देन विशिष्टमपीत्यर्थः। वैशिष्ट्यञ्चार्थद्वारकम्बोध्यम्। घटपदजन्यबोधानन्तरं घटं शाब्दयामीत्येवानुव्यवसायान्न कलशं कुम्भंवेति। अत एव "उदेति सविता ताम्रस्ताम्र एवास्तमेति च" इत्यादौ न पौनरुक्त्यम्। तत्पदानुपादाने उदयास्तयोः शाब्दबोधे ऐकरूप्याऽनिर्वाहादिति भावः। *अत एवेति*। शब्दस्यापि शाब्दबोधे भानादेवेत्यर्थः। *स्वसदृशेति*। स्वशब्देनात्रानुकार्यपरिग्रहः। स्वम्—अनुकार्यः, तत्सादृश्यञ्च स्ववृत्यानुपूर्वीमत्वेनेति बोध्यम्। *शब्दत्वमिति*। अर्थेऽपि स्वसदृशशब्दप्रतिपाद्यत्वस्य सत्वात्तत्रातिव्याप्तिवारणाय शब्दत्वं निवेश्यमिति भावः। *अनुकार्येति*। अनुकरणस्यानुकार्यनिरूपितशक्तिकल्पनया वृत्तिमत्वरूपार्थवत्वस्यानुकरणे सत्वेन भेदपक्षे स्वादिविधिरुपपद्यते। तेन "भुवो वुक्" "क्षियो दीर्घात्" इत्यादिनिर्देशाः सङ्गच्छन्त इति भावः। अयञ्च पक्षः "मतौ छः सूक्त" इति सूत्रे भाष्ये स्पष्टः। *अप्रवृत्तेति*। राम सु इत्यत्र अप्रवृत्तनित्यविधिः "ससजुषो रुः"

जातेऽतिङन्तपदपरतिङन्तत्वरूपोद्देश्यतावच्छेदकसत्त्वे अपरिनिष्ठितत्ववारणाय अप्रवृत्तेति। "स्वरति" इत्यादिविकल्पसूत्रस्य पाक्षिकप्रवृत्तौ 'सेद्धा, इत्यादावसाधुत्ववारणाय नित्यविधीति। अभेदपक्षे तु "अर्थवत्" इति सूत्रस्यार्थवत्त्वरूपोद्देश्यतावच्छेदकानाक्रान्तत्वात् सूत्राप्रवृत्तावपि भू इत्यादि परिनिष्ठितम्। परिनिष्ठितसाधुशब्दौ पर्य्यायौ।

नन्वनुकरणस्यानुकार्यस्वरूपबोधकत्वस्याभावेन कथमनुकार्यस्वरूपप्रतीतिरिति चेत्, सादृश्याख्यसम्बन्धेनेति गृहाण। यथा मैत्रसदृशपिण्डदर्शने मैत्रस्मरणम्। एवं भू इत्याद्यनुकरणज्ञाने तादृशानुकार्यस्य ज्ञानमिति सङ्क्षेपः।

अथ समासादिवृत्त्यर्थः वृत्तिर्द्विधा। जहत्स्वार्थाऽजहत्स्वार्था च। अवयवार्थनिरपेक्षत्वे सति समुदायार्थबोधिकात्वं जहत्स्वार्थात्वम्। अवयवार्थसंवलितसमुदायार्थबोधिकात्वमजहत्स्वार्थात्वम्। रथन्तरं सामभेदः, शुश्रूषा सेवा इति पूर्वस्या उदाहरणम्। राजपुरुष इत्यादावन्त्या समासादिपञ्चसु विशिष्टे एव शक्तिर्न त्ववयवे। रथन्तरं, सप्तपर्णः, शुश्रूषेत्यादौ अवयवार्थानुभवाभावात्। अत एव भाष्ये व्यपेक्षापक्षमुद्भाव्य "अथैतस्मिन्व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्य इत्युक्तम्। धवखदिरौ, निष्कौशाम्बिः, गोरथो, घृतघटो, गुडधानाः, केशचूडः, सुवर्णालङ्कारो, द्विदशाः, सप्तपर्ण, इत्यादौ साहित्य-क्रान्त-युक्त-पूर्ण-मिश्र-सङ्घात-विकार-सुच्प्रत्ययलोप-वीप्साद्यर्था वाचनिका वाच्या इति तद्भाष्याशयः॥

---

इत्यादिविधिः, तदुद्देश्यतावच्छेदकाक्रान्तत्वात्तस्यापरिनिष्ठितत्वम्। राम इत्यस्य तु "ससजुषो रुः" इत्यादिशास्त्रीयोद्देश्यतावच्छेदकानाक्रान्तत्वात्परिनिष्ठितत्वमिति भावः। *यथेति*। गोसदृशपिण्डालोचनेन गवयज्ञानवदिति भावः।

इत्यर्थदीपिकायां नामार्थनिरूपणम्॥

प्रसङ्गात्समासशक्तिमाह—*अथेति*॥ *समासादीति*। आदिना कृत्तद्धितैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयो बोध्याः। जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्थेति फलितार्थकथनम्, लक्षणन्तु—*अवयवार्थेति*। न जहति पदानि स्वार्थं यस्यामिति अजहत्स्वार्था; तल्लक्षणमाह—*अवयवार्थसंवलितेति*। *विशिष्टे एव शक्तिरिति*। तथा हि—'राजपुरुषः' इति समासस्य स्वत्वसंसर्गेण राजसम्बन्धिनि पुरुषे शक्तिः। रथन्तरादिकृदन्तस्य सामविशेषे शक्तिर्नत्ववयवे। अन्यथा रथकरणक-

यत्तु व्यपेक्षावादिनो नैयायिकमीमांसकादयः—न समासे शक्तिः। राजपुरुष इत्यादौ राजपदादेः सम्बन्धिनि लक्षणयैव राजसम्बन्धवदभिन्नः पुरुष इति बोधात्। अत एव राज्ञः पदार्थैकदेशत्वान्न तत्र ऋद्धस्येत्यादिविशेषणान्वयः। 'पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन' इत्युक्तेः। 'सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणयोगो न' इत्युक्तेश्च। न वा घनश्यामो, निष्कौशाम्बिः, गोरथ इत्यादाविवादिप्रयोगापत्तिः। लक्षणयैवोक्तार्थतया "उक्तार्थानामप्रयोग" इति न्यायेन इवादीनामप्रयोगात्। नापि "विभाषा" इति सूत्रमावश्यकम्, लक्षणया राजसम्बन्ध्यभिन्न इति बुबोधयिषायां समासस्य, राजसम्बन्धवानिति बुबोधयिषायां विग्रहस्य च प्रयोगनियमसम्भवात्। नापि शक्तिः, पङ्कजशब्दत्वात् इति पङ्कजशब्दप्रतिद्वन्द्विता शक्तिसाधिका। तत्रावयवशक्तिमजानतोऽपि ततो बोधात्।

न च शक्त्यग्रहे लक्षणया तस्माद्विशिष्टार्थप्रत्ययः सम्भवति। अत एव राजपदादिशक्त्यग्रहे राजपुरुष इत्यादिषु न बोधः। न च चित्रगुरित्यादौ लक्षणासम्भवेऽप्यषष्ठ्यर्थबहुव्रीहौ लक्षणाया असम्भवः, बहुव्युत्प-

---

तरणकर्तुर्बोधापत्तेः। एवं पङ्कजशब्देन पङ्कजनिकर्तुः शैवालादेरपि बोधापत्तिः स्यादिति भावः।

समुदायशक्तिमन्तरापि राजपदस्य राजसम्बन्धिनि लक्षणायां सम्बन्धभानसम्भवे तदर्थं समुदायशक्तिर्न स्वीकार्येति तात्पर्येणाह—*सम्बन्धिनि लक्षणयैवेत्यादिना*। *पदार्थं इति*। तत्वञ्च—आश्रयत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यताश्रयत्वम्। *पदार्थेनान्वेतीति*। घटत्वे नित्यान्वयतात्पर्येण 'नित्यो घटः' इति वाक्यस्य प्रामाण्यवारणायैषा व्युत्पत्तिरिति भावः। *पदार्थैकदेशेनेति*। पदार्थैकदेशत्वञ्च-अवच्छेदकत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितभगवदिच्छीयविशेष्यताश्रयत्वम्। *लक्षणयैवेति*। 'घनश्यामः' इत्यादौ घनशब्दस्य घनसदृशे लक्षणयैवेत्यर्थः। *बुबोधयिषायामिति*। तादृशवक्तृतात्पर्यदशायामित्यर्थः।

*न च शक्त्यग्रह इति*। लक्षणाग्रहे शक्तिग्रहस्य हेतुत्वात्। *लक्षासम्भवेऽपीति*। चित्रगुशब्दस्य चित्राभिन्नगवीसम्बन्धीत्यर्थः। *अषष्ठ्यर्थेति*। प्राप्तोदकादिद्वितीयाद्यर्थबहुव्रीहावित्यर्थः। तत्र ग्रामकर्मकप्राप्तिकर्त्रभिन्नमुदकमिति विग्रहार्थः। उदककर्तृकप्राप्तिकर्मीभूतो ग्राम इति समासार्थः। अत्र प्राप्तपदस्य प्राप्तिकर्तृरूपार्थपरतया तदर्थ लक्षणाऽसम्भवाच्छक्यार्थमादायैवान्वयबोधोपपत्तेरिति दिक्। *बहुव्यु-

त्तिभङ्गापत्तेरिति वाच्यम्। प्राप्तोदक इत्यादौ उदकपदे एव लक्षणास्वीकारात्। पूर्वपदस्य यौगिकत्वेन तत्र लक्षणाया धातुप्रत्ययतदर्थज्ञानसाध्यतया विलम्बितत्वात्। प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्त्यनुरोधाच्च। घटादिपदे चातिरिक्ता शक्तिः कल्प्यमाना प्रत्येकं वर्णेषु बोधकत्वेऽपि विशिष्टे कल्प्यते, विशिष्टस्यैव सङ्केतितत्वात्। प्रकृते चात्यन्तसन्निधानेन प्रत्ययान्वयसौलभ्यायोत्तरपदे एव लक्षणा कल्प्यत इति विशेषः। स्वीकृतं च घटादिपदेष्वपि चरमवर्णस्यैव वाचकत्वं मीमांसकंमन्यैरित्याहुः।

अत्रोच्यते—समासे शक्त्यस्वीकारे विशिष्टस्यार्थवत्त्वाभावेन प्रातिपदिकत्वं न स्यात्। अत एवार्थवत्सूत्रे भाष्ये "अर्थवदिति किम्, अर्थवतां समुदायोऽनर्थकः—दश दाडिमानि षडपूपाः कुण्डमजाऽजिनम्" इति प्रत्युदाहृतम्। एवं च राजपुरुषपदयोस्त्वन्मते प्रत्येकमर्थवत्त्वेऽपि समुदायस्य दशदाडिमादिवदनर्थकत्वात्प्रातिपदिकत्वानापत्तेः। न च "कृत्तद्धित" इति सूत्रे समासग्रहणात् तत्संज्ञेति वाच्यम्। तस्य नियमार्थताया भाष्यकृतैव प्रतिपादितत्वात्। अन्यथासिद्धिं विना नियमायोगात्। अत एव राज्ञः पुरुषः देवदत्तः पचतीत्यादिवाक्यस्य (१)मूलकेनोपदंशमित्यादेश्च न प्रातिपदिकत्वम्।

---

त्पत्तीति*। 'समानाधिकरणनामार्थयोरभेदान्वय' इति व्युत्पत्तिभङ्गापत्तेरिति भावः। *विशिष्टस्यैवेति*। व्यवहारादिना विशिष्टे एव शक्तिग्रहादिति भावः।

*दशदाडिमादिवदिति*। यथा दशदाडिमादिसमुदायस्य वृत्तिमत्त्वरूपार्थवत्त्वाभावान्न प्रातिपदिकत्वम्, न तथा राजन् ङस् पुरुष सु इत्यादेरपीति भावः। *अन्यथासिद्धिं विनेति*। "सिद्धे सति आरभ्यमाणो विधिर्नियमाय भवति" इति न्यायात् नियमार्थत्वमप्यर्थवत्त्वे सत्येव सम्भवति, तत्राप्यर्थवत्पदस्यानुवृत्त्याऽर्थवत्कृदन्तादेरेव। तेनापि संज्ञाविधानात् अर्थवद्ग्रहणस्येहार्थताया एवाकारे सिद्धान्तितत्वात्। पूर्वसूत्रे

---

(१) ननु राज्ञः पुरुष इत्यादिवाक्यस्य नैयायिकमते अर्थवत्त्वाभावादेव प्रातिपदिकत्वं न स्यादत आह—मूलकेनोपदंशमिति। नैयायिकमते उत्तरसूत्रे अर्थवत्पदासम्बन्धात् कृद्ग्रहणपरिभाषया कृदन्ततदादित्वादत्रातिप्रसङ्गो दुर्वार एवेति भावः। किं च बहुपटव इत्यस्य तद्धितान्तत्वाभावात्, परमगार्ग्यायण इत्यस्य तद्धितान्ततदादित्वाभावात्, कुमार्याः राज्ञा श्रितेन च युगपद् वृत्तौ राजकुमारीश्रित इत्यस्य समासत्वाभावाच्च उत्तरसूत्राप्राप्त्या अर्थवत्त्वाभावेन च पूर्वसूत्रस्याप्यप्राप्त्या प्रातिपदिकत्वानापत्तौ स्वादिविधानानापत्तिरिति दिक्।

किञ्च समासे शक्त्यस्वीकारे शक्यसम्बन्धरूपलक्षणाया अप्यसम्भवेन लाक्षणिकार्थवत्त्वस्याप्यसम्भवेन सर्वथा प्रातिपदिकत्वाभाव एव निश्चितः स्यादिति स्वाद्यनुत्पत्तौ 'अपदं न प्रयुञ्जीत' इति भाष्यात्समस्तप्रयोगविलयापत्तेः ॥

अथ तिप्तस्झीत्यतः तीत्यारभ्य ङ्योस्सुबिति पकारेण तिप्प्रत्याहारो भाष्यसिद्धः, तत्पर्युदासेन 'अतिप्प्रातिपदिकम्' इत्येव सूत्र्यताम्, ततः "समासश्च" इति सूत्रं नियमार्थमस्तु किंसूत्रद्वयेनेति। सुप्तिङन्तभिन्नं प्रातिपदिकमित्यर्थात् समासस्यापि सा स्यादिति "समासश्च" इत्यस्य नियमार्थत्वं सुलभमिति चेत्, सत्यम्। प्रत्येकं वर्णेषु संज्ञावारणाय "अर्थवत्" इत्यस्यावश्यकत्वेन समासेऽव्याप्तिस्तदवस्थैव। तथा च प्रातिपदिकसंज्ञारूपकार्यमेवार्थवत्त्वमनुमापयति। समासो; अर्थवान्, प्रातिपदिकत्वात्। यन्नार्थवत्तन्न प्रातिपदिकम्, अभेदविवक्षापक्षे-'भू सत्तायाम्' इत्याद्यनुकरणवदिति ॥

यत्तु 'पदार्थः पदार्थेन' इति, 'वृत्तस्य विशेषणयोगो न' इति वचनद्वयेन ऋद्धस्येत्यादिविशेषणान्वयो न भवति; तत्तु समासे एकार्थीभावे

---

त्वधातुरित्यादिपर्युदासबलेनैवार्थवत्त्वलाभादिति भावः।

*किं सूत्रद्वयेनेतीति*। अयम्भावः—"अतिङ्प्रातिपदिकम्" "समासश्च" इति सूत्रद्वयं कार्यम्। तेन सर्वत्र प्रातिपदिकसंज्ञासिद्धौ समासग्रहणस्य नियमार्थत्वमपि सेत्स्यतीति किं सूत्रद्वयेन। *प्रत्येकवर्णेष्विति*। अर्थवद्ग्रहणाभावे—'धनम्' इत्यत्र धकारमकारयोरपि तिबन्तभिन्नत्वात्प्रातिपदिकसंज्ञापत्तेः। कृते त्वर्थवद्ग्रहणेऽर्थवत्त्वाभावान्न प्रातिपदिकसंज्ञेति भावः। *अनुमापयतीति*। समासः पक्षः, अर्थवत्त्वम्-साध्यम्, प्रातिपदिकत्वादिति हेतुः। भू सत्तायामिति दृष्टान्तः। इदन्त्वनुमानं व्यतिरेकिहेतुकम्। अन्वयमुखेनानुमानन्तु न सम्भवति। अनर्थकनिपातेष्वपि प्रातिपदिकसंज्ञादर्शनात्। नचैवं निपातानां प्रातिपदिकसंज्ञाभाव इति शङ्क्यम्। "निपातस्यानर्थकस्य" इति वार्तिकात् "कृत्तद्धितसमासाश्च" इति सूत्रस्थचकाराच्चानुक्तसमुच्चायकस्य ग्रहणात्।

वस्तुतस्तु व्यतिरेकमुखेनापि निरुक्तमनुमानमसङ्गतम्। यत्र यत्रार्थवत्त्वाभावस्तत्र तत्र प्रातिपदिकसंज्ञाभाव इति अनर्थकनिपातेषु व्यतिरेकव्यभिचारादिति बोध्यम्।

*एकार्थीभाव इति*। पदविशिष्टत्वमेकार्थीभावत्वम्। वै० स्वघटितत्वम्, स्वप्रयोज्यशक्तिज्ञानीयमुख्यविशेष्यतासमानाधिकरणोपस्थितीयविषयतानिरूपितशक्तिज्ञानी-

स्वीकृतेऽवयवानां निरर्थकत्वेन विशेषणान्वयासम्भवात् फलितार्थपरम्, अस्माकं, युष्माकं तु अपूर्ववाचनिकमिति गौरवमित्यग्रे वक्ष्यते ॥

यत्तु प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिरिति, तन्न। उपकुम्भम् अर्धपिप्पलीत्यादौ पूर्वपदार्थे विभक्त्यर्थान्वयेन व्यभिचारात्। मम तु प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेर्विशिष्टोत्तरमेव प्रत्ययोत्पत्तेर्विशिष्टस्यैव प्रकृतित्वात् विशिष्टस्यैवार्थवत्त्वाच्च न दोषः।

किंच राजपुरुषादौ राजपदादेः सम्बन्धिनि सम्बन्धे वा लक्षणा। नाद्यः। राज्ञः पुरुष इतिविवरणविरोधात्। वृत्तिसमानार्थवाक्यस्यैव विग्रहत्वात्। अन्यथा तस्माच्छक्तिनिर्णयो न स्यात्। नान्त्यः। राजसम्बन्धरूपपुरुष इत्यन्वयप्रसङ्गात्।

ननु तर्हि वैयाकरण इत्यस्य व्याकरणमधीते इति पाचक इत्यस्य पचतीति कथं विग्रहः। वृत्तिसमानार्थत्वाभावदित्यत आह—

---

यमुख्यविशेष्यतासमानाधिकरणविषयताप्रयोजकपदघटितत्वम्, स्वप्रयोज्योपस्थितीयविषयत्वानिरूपितविषयताप्रयोजकपदाघटितत्वम्, इति सम्बन्धत्रयेण। प्रथमसम्बन्धनिवेशात् एकपदस्य सर्वं इत्यस्य नैकार्थीभावत्वम्। द्वितीयसम्बन्धदानात् न वाक्यस्य। तृतीयसम्बन्धनिवेशात् उदासीनपदघटितसमुदायस्य 'राजपुरुषः घटः' इत्याकारकस्यैकार्थीभावत्वमिति दिक्।

*उपकुम्भमिति*। कुम्भस्य समीपमुपकुम्भम्, इति विग्रहे "अव्ययं विभक्ति" इति सूत्रेण सामीप्येऽर्थेऽव्ययीभावसमासेन द्वितीयार्थकर्मतायाः समीपेऽन्वयात्, निरुक्तव्युत्पत्तिव्यभिचार इति भावः। *न दोष इति*। स्वनिष्ठविधेयतानिरूपितोद्देश्यतापर्याप्त्यधिकरणत्वमेव प्रकृतित्वम्, तच्च समुदाय एव सम्भवतीति भावः।

ननु 'राजपुरुष' इत्यत्र राजपदस्य सम्बधिनि लक्षणा राजसम्बन्धवदभिन्नः पुरुष इति बोधसम्भवे विशिष्टशक्तिर्निष्फलेति शङ्कां निराकरोति—* किञ्चेति*।

*ननु तर्हीति*। वृत्तिविग्रहयोः समानार्थत्वाङ्गीकारे इत्यर्थः। *वृत्तिसमानार्थत्वाभावादिति*। अत्र प्रश्नकर्तुरयम्भावः—यद्विशेष्यकयत्प्रकारकबोधजनकत्वम्, तद्विशेष्यकतत्प्रकारकबोधजनकत्वं वृत्तेः, इदमेव हि वृत्तिसमानार्थकत्वम्। एवञ्च व्याकरणमधीते पचति इत्यादौ व्यापारविशेष्यकाश्रयत्वप्रकारकबोधस्य वैयाकरणसिद्धान्तात् पाचकः वैयाकरणः इत्यादौ तद्वैपरीत्येन भासमानत्वात् वृत्तिसमा-

आख्यातं तद्धितकृतोर्यत्किञ्चिदुपदर्शकम् ।
गुणप्रधानभावादौ तत्र दृष्टो विपर्ययः ॥ इति ।

तद्धितकृतोर्यत्किञ्चिदर्थबोधकं विवरणमाख्यातं तिङन्तमिति यावत्, तत्र विवरणविव्रियमाणयोर्विशेष्यविशेषणभावविपर्ययो दृष्ट इति। कृदन्ततद्धितान्तयोराश्रयप्राधान्यम्; आख्याते व्यापारस्येति बोध्यम् । ननु रथन्तरशब्दाद्रथिकस्यापि प्रत्ययः किन्न स्याचिति चेत्, मैवम् । 'रूढिर्योगार्थमपहरति' इति न्यायात् । ननु विशिष्टशक्तिस्वीकारे पङ्कजपदादवयवार्थप्रतीतिर्माभूत्, समुदायशक्त्यैव कमलपदवत् पुष्पविशेषप्रत्ययः स्यादिति चेत्, न।

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी ।

इत्यभियुक्तोक्तेः। अवयवार्थसंवलितसमुदायार्थे पद्मे शक्तिस्वीकारात् । अत एव चतुर्विधः शब्दः । यथा-रूढः, योगरूढः, यौगिकः, यौगिकरूढश्चेति । अवयवार्थमनपेक्ष्य समुदायशक्तिमात्रेणार्थबोधकत्वं रूढत्वम्-रथन्तरमित्यादौ । अवयवार्थसंवलितसमुदायशक्त्याऽर्थबोधकत्वं योगरूढत्वम्-पङ्कजमित्यत्र। अवयवशक्त्यैवार्थबोधकत्वं यौगिकत्वम्-पाचिक; पाठिक-

---

नार्थकत्वाभावात्तयोर्विग्रहवाक्यत्वं न सम्भवतीति । *आख्यातम्*—तिङन्तम् । *तद्धितकृतोरिति । 'आक्षिकः, 'कुम्भकारः, इत्यत्राक्षकरणकव्यापाराश्रयः, कुम्भोत्पत्त्यनुकूलव्यापाराश्रय इति बोधः। 'अक्षैर्दीव्यति, 'कुम्भं करोति, इत्यत्राक्षकरणिका देवनानुकूला भावना, कुम्भोत्पत्त्यनुकूला भावनेति च बोधः। *गुणप्रधानभावादाविति* । गुणो-गौणः-विशेषणम्, प्रधानं-विशेष्यन्तयोर्भावः, विशेषणविशेष्यभावः । *तत्र*-तयोः, *विपर्यासो*-व्यत्यासो, *दृष्टः*-फलबलाच्छिष्टैःकल्पित इति यावत् । रथेन तरतीति विग्रहे "संज्ञायां भृतॄवृजि" इति सूत्रेण कर्तरि खज्विधानात् रथकरणकतरणकर्तृमात्रोपस्थितेरवयवशक्त्या रथिकस्यापि बोध इति भावः । *रूढिरिति*। समुदायशक्तिर्यत्रावयवार्थविरोधिनी तत्रैव रूढिरिति भावः। एवञ्च रथन्तरमित्यत्र पदद्वयस्य नैरर्थक्येऽपि रथकरणकतरणकर्तृत्वादिकस्याहार्यारोपेण प्रक्रियानिर्वाहो बोध्यः।

*रूढ इति* । शास्त्रकृत्कल्पितावयवार्थाप्रतीतौ यदर्थनिरूपितं प्रकृतिप्रत्ययसमुदायमात्रे बोधकत्वम्, तत्पदे सा तदर्थनिरूपिता रूढिः, यथा—मणिनूपुरादौ । *योगरूढ इति* । यत्र शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपितं समुदायबोधकत्वम्-सा योगरूढिः, यथा-पङ्कजादिपदे । तत्र पङ्कजनिकर्तृ पद्ममिति बोधः । *यौगिक इति* । शास्त्रकृत्कल्पितावयवार्थमात्रबोधे योगशक्तिः, यथा—पाचकादौ। *यौगिकरूढश्चेति* । अवयवशक्त्या समुदायशक्त्या च अर्थबोधकत्वं यौगिकरूढ-

त्यादौ । अवयवशक्त्या समुदायशक्त्या चार्थबोधकत्वं यौगिकरूढत्वम् । मण्डपानकर्तृपरोऽपि गृहविशेषपरोऽपि मण्डपशब्द उदाहरणमिति विवेकः। व्यपेक्षापक्षे दूषणं शक्तिसाधकम् । हरिरप्याह—

समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ।
बहूनां वृत्तिधर्माणां वचनैरेव साधने ॥
स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः ॥ इति ।

पङ्कजशब्दे योगार्थस्वीकारे शैवालादेरपि प्रत्ययः स्यात् । वृत्तिधर्माः- विशेषणलिङ्गसङ्ख्याद्ययोगादयः, "सविशेषणानां वृत्तिर्न" इत्यादिवचनैरेव साध्याः, इति तत्तद्वचनस्वीकार एव गौरवम् । मम तु एकार्थीभावस्वीकारादवयवार्थाभावाद्विशेषणाद्ययोगो न्यायसिद्धः; वचनं च न कर्तव्यं न्यायसिद्धं चेति लाघवम् । व्यपेक्षायां दूषणान्तरमाह—

चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् ।
कर्त्तव्यन्ते न्यायसिद्धं त्वस्माकन्तदिति स्थितिः ॥

घटपटाविति द्वन्द्वे साहित्यद्योतकचकारनिषेधस्त्वया कर्तव्यः। आदिना घनश्याम इत्यादौ इवशब्दस्य। मम तु साहित्याद्यवच्छिन्ने शक्तिस्वीकारात् "उक्तार्थानामप्रयोग" इति न्यायात्तेषामप्रयोगः। बहुव्युत्पत्तिभञ्जनमिति-अषष्ठ्यर्थबहुव्रीहौ प्राप्तोदक इत्यादौ पृथक्शक्तिवादिनां मते प्राप्तिकर्त्र-

---

त्वम् । यथा—अश्वगन्धादौ । अश्वगन्धापदमौषधिविशेषबोधे रूढम् । अश्वगन्धवत्तया वाजिशालाबोधे यौगिकम् । *मण्डपानकर्तृपरोऽपीति* । मण्डं पिबतीति विग्रहबलान्मण्डपशब्दो यद्यप्यनुशासनबोधितावयवशक्त्या मण्डपानकर्तृरूपार्थबोधकः सम्भवति, कोषजशक्तिबलाच्च गृहविशेषबोधकश्च, तथापि "रूढिर्योगार्थहारिणी" इत्युक्तन्यायेन समुदायनिष्ठरूढिशक्त्या गृहविशेषबोधक एवेति भावः ।

*समासे इति* । समास इति वृत्तिमात्रोपलक्षणम् । "समर्थः पदविधिः" इत्यत्र पदमुद्दिश्य यो विधीयते समासादिः स समर्थः । विग्रहवाक्यार्थाऽभिधाने शक्तः सन् साधुरिति सूत्रार्थस्य भाष्याल्लाभात् । पदोद्देश्यकविधित्वञ्च—कृत्तद्धितसमासैकशेषसनाद्यन्तरूपासु पञ्चस्वपि वृत्तिष्वस्त्येवेति भावः । *पङ्कजशब्दवदिति* । अत्र सप्तम्यन्ताद्वतिर्बोध्या । उपमेये सप्तमीदर्शनात् । पङ्कजशब्दे यथाऽवयवशक्त्यतिरिक्तशक्तिस्तद्वत्समासेऽपीत्यर्थः ।

*शैवालादेरपीति* । पङ्काधिकरणकोत्पत्तिमत्वाविशेषादिति भावः । *विशेषणे-

भिन्नमुदकमित्यादिबोधोत्तरं तत्सम्बन्धिग्रामलक्षणायामपि उदककर्तृकप्राप्तिकर्म ग्राम इत्यर्थलाभे प्राप्ते प्राप्तेतिक्तप्रत्ययस्य कर्त्रर्थकस्य कर्मार्थे लक्षणा, ततोऽपि 'समानविभक्तिकनामार्थयोरभेद एव संसर्ग' इति व्युत्पत्त्या उदकाभिन्नं प्राप्तिकर्मेति स्यात्। उदकस्य कर्तृतया प्राप्तावन्वये तु नामार्थयोरभेदान्वयव्युत्पत्तिभञ्जनं स्यादिति तात्पर्यम्। 'नामार्थप्रकारकशब्दबुद्धित्वावच्छिन्नं प्रति विभक्त्यर्थोपस्थितेः कारणत्वम्' इति व्युत्पत्तिभञ्जनं च। मम तु पृथक् शक्त्यनङ्गीकारात् विशिष्टस्यैव विशिष्टार्थवाचकत्वात् नामार्थद्वयाभावान्न कचिदनुपपत्तिरित्यलम्।

इति श्रीशिवभट्टसुतसतीदेवीगर्भजनागेशभट्टकृता

परमलघुमञ्जूषा समाप्ता॥

---

स्यादि*। समासैकदेशार्थे लिङ्गस्य संख्यायाश्च विशेषणतयाऽन्वयो नेति भावः। *अनुपपत्तिरिति*। विशिष्टशक्तिस्वीकारात् 'लोहितगङ्गम्' 'अरण्ये तिलकाः' इत्यादौ नित्यसमासत्वात् विग्रहवाक्याभावादवयवादर्थाप्रतीतेरपि न संज्ञानवगमापत्तिरूपदूषणमपीति शम्।

मनीषामन्थदण्डेन मथित्वा शास्त्रसागरम्।
अर्थानां दीपिका टीका कृतेयं श्रीसदाशिवैः॥ १॥
हेरम्बवक्त्राम्बुजचुम्बिकाम्बां स्वाङ्के बिभर्तीन्दुमुखीं कुतूकात्।
सत्प्रेममूर्तिर्जगदीश्वरो यो गृह्णातु टीकाकृतिपुष्पमालाम्॥ २॥
शास्त्रे कृती नो न च बुद्धिशाली श्रीशानुभावात्कृपया गुरोश्च।
टीका मदीया विदुषां मनोज्ञा स्याच्चेत्प्रमोदो हृदि मेऽन्यथा न॥ ३॥

इति जोशीत्युपाह्वदामोदरात्मजसदाशिवशास्त्रिकृतार्थदीपिकायां

समासशक्तिनिरूपणं समाप्तिमगमत्।

